# निवेदनपत्रिका ।

भगवता बादरायणेन प्रणीतायाः शारीरकमीमांसाया बोधायनटङ्कद्रमिडगुहदेवप्रभृतिभिर्विरचितानां व्याख्यानामविरोधेन प्रतिपन्थिमतनिराकरणसंवलितं श्रीभाष्यं न्यबध्नाद्भगवान् श्री१०८रामानुजाचार्यः । तस्य चातिविस्तृतत्वात्सूत्राधिकरणार्थयोः सुखावगतयेऽमुं च वेदान्तदीपं जग्रन्थ । एष च छात्राणां महोपकारक इत्यमंशो ग्रन्थावलोकनमात्रेणैव सुज्ञानः सुधीभिः । सोयं ग्रन्थमणिर्दाक्षिणात्ये जनपदे विशिष्टाद्वैतिभिः प्रायः सर्वैरेव श्रीभाष्याध्ययनाधिकारसंपत्तयेऽधीयमानः परितः प्रचलितः । मुद्रितश्चायं त्रैलिङ्गाक्षरेषु नैकवारम् । औत्तराहेषु पुनः प्रबन्धसंकलनपरिश्रमिणो विना न कोऽप्येतस्य वार्तामपि जानाति । का कथा ग्रन्थाध्ययने । एतदेव विमृश्यास्य प्रचारोऽत्र संपादनीय इत्याशयेन मया संशोधकीभूय संमुद्रितो वाराणसेयसंस्कृतपुस्तकावल्याम्* ।

एतत्प्रणेतृश्च श्रीसंप्रदायाभिधानविशिष्टाद्वैतसिद्धान्तागारमूलस्तंभेषु भगवत्सु श्रीमन्नाथमुनियामुनेयपादरामानुजाचार्येषु तृतीयस्यावतारकाल ऊनचत्वारिंशदधिकनवशतसंख्यशालिवाहनशक इति स्फुटमवगम्यते'धीर्लब्धे'ति(९३९) वाक्येन प्रामाणिकजनोदाहियमाणेन ।

* यद्यपि वाराणसीस्थराजकीयसंस्कृतपाठशालाध्यापकैः शोध्यत इयं पुस्तकावलीति मुखपृष्ठादवगम्यते । तथापि स नियमोऽधुना त्यक्त इति यदद्भिस्तत्प्रकाशकैरभ्युपगमितोऽस्मि मत्संशोधितपुस्तकस्यात्र प्रकाशने ।

"कल्यब्दे दिव्यकुंभे बुधजनविदिते वत्सरे पिङ्गलाख्ये
चैत्रे मासे गतेषु द्वियुतदशदिनेष्वेधमाने हिमांशौ ।
पंचम्यार्द्रासमेते सुरगुरुदिवसे कर्कटाख्ये च लग्ने
श्रीयत्रामानुजार्यः समजनि निगमान्तार्थसंरक्षणार्थम् ॥"

इति प्राचीनतांमदाधिकश्लोकोऽप्यत्र प्रमाणम् । तथा च खिस्ताब्दे सप्तदशाधिकसहस्रतमे(१०१७) श्रीभाष्यकारोऽवातरदिति निश्चीयते । यतिवरस्य देहत्यागश्च त्रिसप्तत्युत्तरैकादशशततमे खिस्ताब्दे इति शालिवाहनशकबोधकात् 'धर्मो नष्टः' (१०५९) इति वाक्यादवगम्यते ।

भगवद्रामानुजपादप्रणीतग्रन्थाः कतीत्यत्र च
"विष्णवर्चाकृतमवनोत्सुको जनानां
श्रीगीताविवरणभाष्यदीपसारान् ।
तद्गद्यत्रयमकृत प्रपन्ननित्या-
नुष्ठानक्रममपि योगिराट् प्रबन्धान् ॥"

इत्यनेन दिव्यसूरिचरितश्लोकेनावगम्यते (१) भगवद्गीताभाष्यम् (२) ब्रह्मसूत्रभाष्यम् (३) वेदान्तदीपः (४) वेदान्तसारः (५) शरणागतिगद्यम्–श्रीरङ्गगद्यम्–श्रीवैकुण्ठगद्यं चेति गद्यत्रयम् (६) भगवदाराधनक्रमश्चेति पडिति । वेदार्थसंग्रहग्रन्थोऽपि यतीन्द्रप्रणीत एवेत्यन्यत्र प्रकटितं तत्रैव

"इत्युक्ता निगमशिरार्थसंग्रहाख्यां
विन्यस्तां कृतिपुरतीक्रियार्थमस्य ।" इत्यनेन ।

तत्र गद्यत्रयम्–वेदान्तसारम्–भगवदाराधनक्रमं च वर्जयित्वाऽन्ये ग्रन्था मुद्रिता एव । एतेऽपि तैलिङ्गाक्षरेषु मुद्रिता एवेति ज्ञेयम् ।

विस्तरेण च श्रीरामानुजचरितं दिव्यसूरिचरितादिषु निबन्धेषु स्फुटमुपवर्णितं प्राच्यैः।

किं नु नाम रामानुजीयं मतमिति जिज्ञासा च वेदान्तदीपग्रन्थारम्भावलोकन एव निवर्तत इति तन्मुद्रणेनैव सर्वं सिद्धम्।

वेदान्तदीपग्रन्थशोधनाधारभूतानि च त्रीणि पुस्तकानि। तत्रैकं मधुरेश(मद्रास)नगरे त्रैलिङ्गाक्षरेषु मुद्रितं वेदान्तसारसहितम्। अन्यच्चास्मत्प्रपितामहपादैः सुगृहीतनामभिः श्रीपरवस्तुवंशावतंसैः श्रीनिवासाचार्यैरार्यवरगुरुभिर्लिखितं त्रैलिङ्गाक्षरमयं तालपत्रात्मकञ्च। अपरं वाराणसीस्थस्यानेकमाक्तनापूर्वग्रन्थसंपादनधुरीणस्य श्रीमद्गोविन्ददासमहाशयस्य सकाशादधिगतम्।

एवं पुस्तकत्रयमाधारीकृत्य प्रवर्तितेऽप्यस्मिन् मुद्रणे बहुशो मुद्रालयपुरुषाणामविवेकात्कचिच्च ममानवधानादनेके दोषाः समापतिताः। तांश्च द्वितीयमुद्रणावसरे निराकरिष्यामीति नात्र विमनायन्तां सुमनसः॥

इत्यावेदयिता
आचार्य–भट्टनाथस्वामी।

नमः परमर्षिभ्यः ।

# ब्रह्मसूत्रपाठः ।

१ (१)अथातो ब्रह्मजिज्ञासा ॥
२ (२)जन्माद्यस्य यतः ॥
३ (३)शास्त्रयोनित्वात् ॥
४ (४)तत्तु समन्वयात् ॥
५ (५)ईक्षतेर्नाशब्दम् ॥
६ गौणश्चेन्नात्मशब्दात् ॥
७ तन्निष्ठस्य मोक्षोपदेशात् ॥
८ हेयत्वावचनाच्च ॥
९ प्रतिज्ञाविरोधात्[1] ॥
१० स्वाप्ययात् ॥
११ गतिसामान्यात् ॥
१२ श्रुतत्वाच्च ॥
१३ (६)आनन्दमयोऽभ्यासात् ॥
१४ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥
१५ तद्धेतुव्यपदेशाच्च ॥
१६ मान्त्रवर्णिकमेव च गीयते[2] ॥
१७ नेतरोऽनुपपत्तेः ॥
१८ भेदव्यपदेशाच्च ॥
१९ कामाच्च नानुमानापेक्षा ॥
२० अस्मिन्नस्य च तद्योगं शास्ति ॥
२१ (७)अन्तस्तद्धर्मोपदेशात् ॥
२२ भेदव्यपदेशाच्चान्यः ॥
२३ (८)आकाशस्तल्लिङ्गात् ॥
२४ (९)अत एव प्राणः ॥
२५ ज्योतिश्चरणाभिधानात् ॥
२६ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्[3]तथा हि दर्शनम् ॥
२७ भूतादिपादव्यपदेशोपपत्तेश्चैत्रम् ॥
२८ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥
२९ (११)प्राणस्तथानुगमात् ॥
३० न वक्तुरात्मोपदेशादिति चे-

---

१ केचिदेतत्सूत्रं न पठन्ति । २ गम्यते इति कश्चित्पठति ।
३ निगदात् इति केचित्पठन्ति ।

ऽध्यात्मसम्बन्धभूमा ह्य-
स्मिन् ॥

३१ शास्त्रदृष्ट्या तूपदेशो वाम-
देववत् ॥

३२ जीवमुख्यप्राणलिङ्गान्नेति
चेन्नोपासात्रैविध्यादाश्रि-
तत्वादिह तद्योगात् ॥

इति प्रथमाध्यायस्य प्रथमः पादः ॥

—:०:—

१ (१)सर्वत्र प्रसिद्धोपदेशात् ॥
२ विवक्षितगुणोपपत्तेश्च ॥
३ अनुपपत्तेस्तु न शारीरः ॥
४ कर्मकर्तृव्यपदेशाच्च ॥
५ शब्दविशेषात् ॥
६ स्मृतेश्च ॥
७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च
नेति चेन्न निचाय्यत्वादेवं
व्योमवच्च ॥
८ सम्भोगप्राप्तिरिति चेन्न
वैशेष्यात् ॥
९ (२)अत्ता चराचरग्रहणात् ॥
१० प्रकरणाच्च ॥
११ गुहां प्रविष्टावात्मानौ हि
तद्दर्शनात् ॥
१२ विशेषणाच्च ॥
१३ (३)अन्तर उपपत्तेः ॥
१४ स्थानादिव्यपदेशाच्च ॥
१५ सुखविशिष्टाभिधानादेव च।
१६ अत एव च स ब्रह्म१ ॥
१७ श्रुतोपनिषत्कगत्यभिधानाच्च
१८ अनवस्थितेरसम्भवाच्च
नेतरः ॥
१९ (४)अन्तर्याम्यधिदैवाधिलो-
कादिषु तद्धर्मव्यप-
देशात् ॥
२० न च स्मार्तमतद्धर्माभिला-
पाच्छारीरश्च२ ॥
२१ उभयेऽपि हि भेदेनैनमधी-
यते ॥
२२ (५)अदृश्यत्वादिगुणको ध-
र्मोक्तेः ॥
२३ विशेषणभेदव्यपदेशाभ्यां
च नेतरौ ॥
२४ रूपोपन्यासाच्च ॥
२५ (६)वैश्वानरः साधारणशब्द-
विशेषात् ॥

१ केचिदेतत्सूत्रं न पठन्ति । २ केचिच्छारीरश्चेत्यंशमभिम-
सूत्रांशं पठन्ति । ३ अधिलोकशब्दः कैश्चिन्नपठ्यते ।

२६ स्मर्यमाणमनुमानं स्यादिति ॥

२७ शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि[2]चैनमधीयते ॥

२८ अत एव न देवता भूतञ्च ॥

२९ साक्षादप्यविरोधं जैमिनिः ॥

३० अभिव्यक्तेरित्याश्मरथ्यः ॥

३१ अनुस्मृतेर्बादरिः ॥

३२ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥

३३ आमनन्ति चैनमस्मिन् ॥

इति प्रथमाध्यायस्य द्वितीयः पादः ॥

•—:०:—

१ (१)द्युभ्वाद्यायतनं स्वशब्दात् ॥

२ मुक्तोपसृप्यव्यपदेशाच्च ॥

३ नानुमानमतच्छब्दात्प्राणभृच्च ॥[3]

४ भेदव्यपदेशाच्च[4] ॥

५ प्रकरणात् ॥

६ स्थित्यदनाभ्याञ्च ॥

७ (२)भूमा सम्प्रसादादध्युपदेशात् ॥

८ धर्मोपपत्तेश्च ॥

९ (३)अक्षरमम्बरान्तधृतेः ॥

१० सा च प्रशासनात् ॥

११ अन्यभावव्यावृत्तेश्च ॥

१२ (४)ईक्षतिकर्मव्यपदेशात्सः ॥

१३ (५)दहर उत्तरेभ्यः ॥

१४ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ॥

१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥

१६ प्रसिद्धेश्च ॥

१७ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥

१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥

१९ अन्यार्थश्च परामर्शः ॥

२० अल्पश्रुतेरिति चेत्तदुक्तम् ॥

२१ अनुकृतेस्तस्य च ॥

२२ अपि[5]स्मर्यते ॥

२३ (६)शब्दादेव प्रमितः ॥

२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥

---

१ स्थानाच्च इति कैश्चित्पठ्यते । २ पुरुषविधमपीति कश्चित्पठति ।
३ केचित्प्राणभृच्चेति पृथक्सूत्रं पठन्ति ।
४ चकारः क्वचिन्नास्ति । ५ अपि चेति केचित्पठन्ति ॥

२५ (७)तदुपर्यपि बादरायणः सम्भवात् ॥

२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥

२७ शब्द इतिचेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥

२८ अत एव च नित्यत्वम् ॥

२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥

३० (८)मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥

३१ ज्योतिषि भावाच्च ॥

३२ भावन्तु बादरायणोऽस्ति हि॥

३३ (९)शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥

३४ क्षत्रियत्वगतेश्च ॥

३५ उत्तरत्रचैत्ररथेन लिङ्गात् १॥

३६ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥

३७ तदभावनिर्द्धारणे च प्रवृत्तेः ॥

३८ श्रवणाध्ययनार्थप्रतिषेधात् ॥

३९ स्मृतेश्च२ ॥

४० (६)कम्पनात् ॥

४१ ज्योतिर्दर्शनात् ॥

४२ (१०)आकाशो ऽर्थान्तरत्वादिव्यपदेशात् ॥

४३ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥

४४ पत्यादिशब्देभ्यः ॥

इति प्रथमाध्यायस्य तृतीयः पाद ॥

---

१ (१)आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥

२ सूक्ष्मन्तु तदर्हत्वात् ॥

३ तदधीनत्वादर्थवत् ॥

४ ज्ञेयत्वावचनाच्च ॥

५ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥३

६ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥

७ महद्वच्च ॥

८ (२)चमसवदविशेषात् ॥

९ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥

---

१ केचिदादिममेतमेकं पठन्ति । क्षत्रियत्वावगतेरिति तेषां पाठः ।
२ केचिदेतदादिमसूत्रेण मेलयन्ति । ३ प्रकरणादिति पृथक् सूत्रं पठति कश्चित् ।

१० कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥
११ (३)न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥
१२ प्राणादयो वाक्यशेषात् ॥
१३ ज्योतिषैकेषामसत्यन्ने ॥
१४ (४)कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥
१५ समाकर्षात् ॥
१६ (५)जगद्वाचित्वात् ॥
१७ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥
१८ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥
१९ (६)वाक्यान्वयात् ॥
२० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥
२१ उत्क्रमिष्यत एव भावादौडुलोमिः ॥
२२ अवस्थितेरिति काशकृत्स्नः ॥
२३ (७)प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥
२४ अभिध्योपदेशाच्च ॥
२५ साक्षाच्चोभयाम्नानात् ॥
२६ आत्मकृतेः ॥
२७ परिणामात् ॥[२]
२८ योनिश्च हि गीयते ॥
२९ (८)एतेन सर्वे व्याख्याता व्याख्याताः ॥

इति प्रथमाध्यायस्य चतुर्थपादः ॥

—§—

अथ द्वितीयोऽध्यायः ।

१ (१)स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥
२ इतरेषाञ्चानुपलब्धेः ॥
३ (२)एतेन योगः प्रत्युक्तः ॥
४ (३)न विलक्षणत्वादस्य तथात्वञ्च शब्दात्[३] ॥
५ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥
६ दृश्यते तु[४] ॥
७ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥

---

१ आत्मकृतेः परिणामादित्येकमेव केचित्सूत्रं पठन्ति ।

२ लिङ्गादिति चेत्तदिति कश्चित् लिङ्गादिति चेन्न तदिति कश्चिच्च पठतः ॥

३ कश्चिदेतत्सूत्रानन्तरं दृश्यते तु इत्यधिकं सूत्रं पठति ।

४ दृश्यते च इति कश्चित्पठति ।

८ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥
९ न तु दृष्टान्तभावात् ॥
१० स्वपक्षदोषाच्च ॥
११ तर्काप्रतिष्ठानादपि ॥
१२ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः[१] ॥
१३ (४)एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥
१४ (५)भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥
१५ (६)तदनन्यत्वमारम्भणशब्दादिभ्यः ॥
१६ भावे चोपलब्धेः ॥
१७ सत्त्वाच्चापरस्य[२] ॥
१८ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च[३] ॥
१९ पटवच्च ॥
२० यथा च[४] प्राणादिः[५]॥
२१ (७)इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥
२२ अधिकन्तु भेदनिर्देशात् ॥
२३ अश्मादिवच्च तदनुपपत्तिः ॥
२४ (८)उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥
२५ देवादिवदपि लोके ॥
२६ (९)कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥
२७ श्रुतेस्तु शब्दमूलत्वात् ॥
२८ आत्मनि चैवं विचित्राश्च हि ॥
२९ स्वपक्षदोषाच्च ॥
३० सर्वोपेता च तद्दर्शनात् ॥
३१ विकरणत्वान्नेति चेत्तदुक्तम् ॥
३२ (१०)न प्रयोजनवत्त्वात् ॥
३३ लोकवत्तु लीलाकैवल्यम् ॥
३४ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥
३५ न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च[७] ॥

---

१ ११-१२ सूत्रे मेलयन्ति केचित् । तत्र केनचित् तिष्ठानादप्यन्यथाऽप्यनु इति पठ्यते । २ अवरस्येति केषां चित्पाठः ।
३ युक्तेः शब्दान्तराच्चेति पृथक्कृतं कैश्चित् ।
४ चकारः केनचिन्न पठ्यते । ५ नपुंसकं केचित्पठन्ति ।
६ नकर्मावि इति कश्चित् पठति ।
७ उपपद्यते इत्याद्यंश केचित्पृथक्कुर्वन्ति ।

३६ सर्वधर्मोपपत्तेश्च ॥

इति द्वितीयाध्यायस्य प्रथमः पादः ॥

—:०:—

१ (१)रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च१ ॥

२ पयोऽम्बुवच्चेत्तत्रापि ॥

३ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥

४ अन्यत्राभावाच्च न तृणादिवत् ॥

५ पुरुषाश्मवदिति चेत्तथापि२ ॥

६ अङ्गित्वानुपपत्तेश्च ॥

७ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥

८ अभ्युपगमेऽप्यर्थाभावात् ॥३

९ विप्रतिषेधाच्चासमञ्जसम् ॥

१० (२)महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥

११ उभयथापि न कर्मातस्तदभावः ॥

१२ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥

१३ नित्यमेव च भावात् ॥

१४ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥

१५ उभयथा च४ दोषात् ॥

१६ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥

१७ (३)समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥

१८ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावा५निमित्तत्वात् ॥

१९ उत्तरोत्पादे च पूर्वनिरोधात् ॥

२० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥

२१ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥

२२ उभयथा च दोषात् ॥

२३ आकाशे चाविशेषात् ॥

२४ अनुस्मृतेश्च ॥

५ नासतो ऽदृष्टत्वात् ॥

---

१ प्रवृत्तेश्च इति पृथक् सूत्रं केचित् पठन्ति ।

२ तत्रापीति पाठो ऽपि कस्यचिन्मतग्रन्थेषु क्वचिद्दृश्यते ॥

३ केचिदेतत्सूत्रं ४र्थसूत्रानन्तरं पठन्ति ।

४ उभयथापि चेति कश्चित् पठति ॥

५ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वादिति केचित् पठन्ति ।

२६ उदासीनानामपि चैवं सिद्धिः ॥
२७ (४)नाभाव उपलब्धेः ॥
२८ वैधर्म्याच्च न स्वप्नादिवत् ॥
२९ न भावोऽनुपलब्धेः१ ॥
३० (५)सर्वथाऽनुपपत्तेश्च ॥
३१ (६)नैकस्मिन्नसम्भवात् ॥
३२ एवञ्चात्माऽकार्त्स्न्यम् ॥
३३ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥
३४ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः२ ॥
३५ (७)पत्युरसामञ्जस्यात्३ ॥
३६ अधिष्ठानानुपपत्तेश्च ॥
३७ करणवच्चेन्न भोगादिभ्यः ॥
३८ अन्तवत्त्वमसर्वज्ञता वा ॥
३९ (८)उत्पत्त्यसम्भवात् ॥
४० न च कर्तुः करणम् ॥
४१ विज्ञानादिभावे वा तदप्रतिषेधः ॥
४२ विप्रतिषेधाच्च ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

—:०—

१ (१)न वियदश्रुतेः ॥
२ अस्ति तु ॥
३ गौण्यसम्भवाच्छब्दाच्च४ ॥
४ स्याच्चैकस्य५ ब्रह्मशब्दवत् ॥
५ प्रतिज्ञाहानिरव्यतिरेकात् ॥
६ शब्देभ्यः६ ॥
७ यावद्विकारन्तु विभागो लोकवत् ॥
८ एतेन मातरिश्वा७ व्याख्यातः ॥
९ असम्भवस्तु सतोऽनुपपत्तेः ।
१० (२)तेजोऽतस्तथा ह्याह ॥
११ आपः ॥
१२ पृथिवी८ ॥

१ केचिदेतदनन्तरं क्षणिकत्वाच्च इति सूत्रमपि पठन्ति ।
२ अविशेषादिति केचित् पठन्ति ॥
३ एतदनन्तरं सम्बन्धानुपपत्तेश्चेति सूत्रमपि केचित्पठन्ति । तत्र पत्तेश्चेति कश्चित् पठन्ति ॥
४ शब्दाच्च इति पृथक्सूत्रं पठन्ति केचित् ॥
५ स्याच्चैकस्यापीति केचित्पठन्ति ॥
६ केचिच्छब्देभ्य इति पूर्वसूत्रेण मेलयन्ति ॥
७ रिश्वापीति कश्चित्पठति । ८ केचिदेतदग्रिमसूत्रेण मेलयन्ति ॥

१३ अधिकाररूपशब्दान्तरे-
भ्यः१ ॥

१४ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥

१५ विपर्ययेण तु क्रमोऽत उपपद्यते च२ ॥

१६ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥

१७ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥

१८ (३)नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥

१९ (४)ज्ञो ऽत एव३ ॥

२० उत्क्रान्तिगत्यागतीनाम् ॥

२१ स्वात्मना चोत्तरयोः ॥

२२ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥

२३ स्वशब्दोन्मानाभ्यां च ॥

२४ अविरोधश्चन्दनवत् ॥

२५ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥

२६ गुणाद्वाऽलोकवत् ॥

२७ व्यतिरेको गन्धवत्तथा च दर्शयति४ ॥

२८ पृथगुपदेशात् ॥

२९ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥

३० यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥

३१ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति५योगात् ॥

३२ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥

३३ (६)कर्ता शास्त्रार्थवत्त्वात् ॥

३४ उपादानाविहारोपदेशाच्च ॥

३५ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥

३६ उपलब्धिवदनियमः ॥

---

१ शब्दान्तरादिभ्य इति कश्चित्पठति पूर्वसूत्रेणास्यैक्यं च ॥

२ कश्चिच्चकारं न पठति ।

३ कश्चिदेतत्सूत्रानन्तर युक्तेश्चेति सूत्रमधिकं पठति ॥

४ तथाचेत्यादि पृथक्पठन्ति केचित् ॥

५ सतो व्यक्तीति कश्चित् पठति ॥

६ केचिदेतत्सूत्रस्थाने विहारोपदेशात्-उपादानादिति सूत्रद्वयं पठन्ति।

३७ शक्तिविपर्ययात् ॥

३८ समाध्यभावाच्च ॥

३९ यथा च तक्षोभयथा ॥

४० (६)परात्तु तच्छ्रुतेः ॥

४१ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा[1]वैयर्थ्यादिभ्यः ॥

४२ (७)अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥

४३ मन्त्रवर्णात्[2] ॥

४४ अपि[3] स्मर्यते ॥

४५ प्रकाशादिवत्तु नैवं[4] परः ॥

४६ स्मरन्ति च ॥

४७ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥

४८ असन्ततेश्चाव्यतिकरः ॥

४९ आभासा[5] एव च ॥

५० अदृष्टानियमात् ॥

५१ अभिसन्ध्यादिष्वपि चैवम् ॥

५२ प्रदेशभेदादिति चे[6]न्नान्तर्भावात् ॥

इति द्वितीयाध्यायस्य तृतीयः पादः ॥

—.ः—

१ (१)तथा प्राणाः ॥

२ गौण्यसम्भवात्तत्प्राक्छ्रुतेश्च[7] ॥

३ तत्पूर्वकत्वाद्वाचः ॥

४ (२)सप्तगतेर्विशेषितत्वाच्च ॥

५ हस्तादयस्तु स्थितेऽतो नैवम् ॥

६ (३)अणवश्च ॥

७ श्रेष्ठश्च ॥

८ (४)न वायुक्रिये पृथगुपदेशात् ॥

९ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥

१० अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥

११ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥

१२ (५)अणुश्च ॥

---

१ प्रतिषेधा इति केषांचित्पाठः । २ वर्णाच्च इति केषांचित्पाठः ।

३ अपि चेति केषांचित्पाठः ॥ ४ चवै इति केषांचित्पाठः ।

५ एकवचनान्तं केचित् पठन्ति ॥

६ प्रदेशादिति चेदिति केचित् पठन्ति ॥

७ तत्प्रागित्यादिसूत्रान्तरीकुर्वन्ति केचित् । तस्यादौ प्रतिज्ञानुपरोधाच्च इति सूत्रमपि कश्चित्पठति ॥

१३ (६)ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्[१] ॥
१४ तस्य च नित्यत्वात् ॥
१५ (७)त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥
१६ भेदश्रुतेर्वैलक्षण्याच्च[२] ॥
१७ (८)संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥
१८ मांसादि भौमं यथाशब्दमितरयोश्च ॥
१९ वैशेष्यात्तु तद्वादस्तद्वादः ॥

इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

—:०:—

अथ तृतीयो ऽध्यायः ।

१ (१)तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥
२ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥
३ प्राणगतेश्च ॥
४ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥
५ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥
६ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥
७ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥
८ (२)कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च[३]॥
९ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥
१० आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥
११ सुकृतदुष्कृते एवेति तु बादरिः ॥
१२ (३)अनिष्टादिकारिणामपि च श्रुतम् ॥
१३ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥
१४ स्मरन्ति च ॥
१५ अपि[४] सप्त ॥
१६ तत्रापि[५] तद्व्यापारादविरोधः ॥

---

१ केचित्प्राणवतेत्यादि पृथक्कुर्वन्ति ।
२ केचिद्वैलक्षण्याच्चेति पृथक्कुर्वन्ति ॥
३ यथेतमित्यादि पृथक् पठति कश्चित् ॥
४ अपि चेति केचित् पठन्ति । ५ तत्रापि चेति केचित् पठन्ति ।

१७ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥
१८ न तृतीये तथोपलब्धेः ॥
१९ स्मर्यतेऽपि च लोके ॥
२० दर्शनाच्च ॥
२१ तृतीयशब्दावरोधः संशोकजस्य ॥
२२ (४)तत्स्वाभाव्यापत्तिरुपपत्तेः ॥
२३ (५)नातिचिरेण विशेषात् ॥
२४ (६)अन्याधिष्ठिते पूर्ववदभिलापात् ॥
२५ अशुद्धमिति चेन्न शब्दात् ॥
२६ रेतःसिग्योगोऽथ ॥
२७ योनेः शरीरम् ॥

*इति तृतीयाध्यायस्य प्रथमः पादः ॥*

---

१ (१)सन्ध्ये सृष्टिराह हि ॥
२ निर्मातारञ्चैके पुत्रादयश्च ॥
३ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्[२] ॥
४ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥
५ देहयोगाद्वा सोऽपि ॥
६ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥
७ (२)तदभावो नाडीषु तच्छ्रुतेरात्मनि च[३] ॥
८ अतः प्रबोधोऽस्मात् ॥
९ (३)स एव तु[४] कर्मानुस्मृतिशब्दविधिभ्यः ॥
१० (४)मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥
११ (५)न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥
१२ भेदा[५]दिति चेन्न प्रत्येकमतद्वचनात् ॥
१३ अपि चैवमेके ॥
१४ अरूपवदेव हि तत् प्रधानत्वात् ॥
१५ प्रकाशवच्चावैयर्थ्यात्[६] ॥
१६ आह च तन्मात्रम् ॥
१७ दर्शयति चाथो अपि स्मर्यते ॥
१८ अत एव चोपमा सूर्यकादिवत् ॥

---

१ तत्साभाव्येति केचित् पठन्ति।
२ केचिदेतत्सूत्रानन्तरं सूचकश्चेत्यादि सूत्रं पाठन्ति।
३ रात्मनिहेति कश्चित् पठति। ४ स एव चेति कश्चित् पठति।
५ न भेदादिति केचित् पठन्ति। ६ यर्थ्यमिति कश्चित् पठति।

१९ अम्बुवदग्रहणात्तु न तथात्वम् ॥
२० वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च१ ॥
२१ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥
२२ तदव्यक्तमाह हि ॥
२३ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥
२४ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥
२५ अतोऽनन्तेन तथा हि लिङ्गम् ॥
२६ (६)उभयव्यपदेशात्त्वहिकुण्डलवत् ॥
२७ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥
२८ पूर्ववद्वा ॥
२९ प्रतिषेधाच्च ॥
३० (७)परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥
३१ सामान्यात्तु२ ॥
३२ बुद्ध्यर्थः पादवत् ॥
३३ स्थानविशेषात् प्रकाशादिवत् ॥
३४ उपपत्तेश्च ॥
३५ तथान्य४प्रतिषेधात् ॥
३६ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥
३७ (८)फलमत उपपत्तेः ॥
३८ श्रुतत्वाच्च ॥
३९ धर्मं जैमिनिरत एव ॥
४० पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥

इति तृतीयाध्यायस्य द्वितीय पादः ॥

—:०—

१ (१)सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥
२ भेदान्नेति चेदे५कस्यामपि ॥
३ स्वाध्यायस्य तथात्वे६ हि

१ केचिद्दर्शनाच्चेति पृथक्कुर्वन्ति। तत्र कश्चित् भाक्तमन्तरिति पठति ॥
२ कश्चित् प्रकाशवच्चेति पठति। प्रकाशश्चेत्यादिपृथक्सूत्रीकरोति च ॥
३ एतत्सूत्रस्थाने दर्शनादिति सूत्रं कश्चित् पठति।
४ तथान्यदिति कश्चित् पठति।
५ दाशानि चेन्न इति केचित् पठन्ति। दादिति चेन्न इति कश्चित् पठति।
६ त्वेनेति केचित्पठन्ति।

समाचारेऽधिकाराच्च सव-
वच्च तन्नियमः१ ॥
४ दर्शयति च ॥
५ उपसंहारोऽर्थाभेदाद्विधि-
शेषवत् समाने च ॥
६ (२)अन्यथात्वं२ शब्दादिति
चेन्नाविशेषात् ॥
७ न वा प्रकरणभेदात् परो-
वरीयस्त्वादिवत् ॥
८ संज्ञातश्चेत्तदुक्तमस्ति तु त-
दपि ॥
९ व्याप्तेश्च समञ्जसम् ॥
१० (३)सर्वाभेदादन्यत्रेमे ॥
११ (४)आनन्दादयः प्रधानस्य ॥
१२ प्रियशिरस्त्वाद्यप्राप्तिरुपच-
यापचयौ हि भेदे ॥
१३ इतरे त्वर्थसामान्यात् ॥
१४ आध्यानाय प्रयोजनाभा-
वात् ॥
१५ आत्मशब्दाच्च ॥
१६ आत्मगृहीतिरितरवदुत्तरात् ॥
१७ अन्वयादिति चेत् स्यादव-
धारणात् ॥
१८ (५)कार्याख्यानादपूर्वम् ॥
१९ (६)समान एवञ्चाभेदात् ॥
२० (७)सम्बन्धादेवमन्यत्रापि ॥
२१ न वा विशेषात् ॥
२२ दर्शयति च ॥
२३ (८)सम्भृतिद्युव्याप्त्यपि चा-
तः ॥
२४ (९)पुरुषविद्यायामपि४ चेत-
रेषामनाम्नानात् ॥
२५ (१०)वेधाद्यर्थभेदात् ॥
२६ (११)हानौ तूपायनशब्दशेष-
त्वात् कुशाच्छन्दःस्तुत्युपगा-
नवत्तदुक्तम् ॥
२७ (१२)साम्पराये तर्तव्याभा-
वात् तथा ह्यन्ये ॥
२८ छन्दत उभयाविरोधात् ॥
२९ गतेरर्थवत्त्वमुभयथान्यथा
हि विरोधः ॥
३० उपपन्नस्तल्लक्षणार्थोपलब्धे-
र्लोकवत् ॥
३१ यावदधिकारमवस्थितिरा-
धिकारिकाणाम् ॥
३२ (१३)अनियमः सर्वेषामवि-

१ धिकाराच्चेत्यन्तमेकसूत्र पठितम् परिशिष्टं पृथक्पठन्ति कश्चित्, स-
लिलवच्चेति तत्पाठः ॥ २ अन्यथात्व चेति कश्चित् पठति ।
३ प्राप्तेरिति कश्चित्पठति । ४ मिवेति केचित्पठन्ति ।

रोधः शब्दानुमानाभ्याम्[1] ॥

३३ (१४)अक्षरधियां त्ववरोधः[2] सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥

३४ इयदामननात् ॥

३५ अन्तरा भूतग्रामवत् स्वात्मनो[3]ऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्[4] ॥

३६ व्यतिहारो विशिंषन्ति हीतरवत् ॥

३७ सैव हि सत्यादयः ॥

३८ (१६)कामादी[5]तरत्र तत्र चायतनादिभ्यः ॥

३९ आदरादलोपः ॥

४० उपस्थितेऽतस्तद्वचनात् ॥

४१ (१७)तन्निर्धारणा[6]नियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥

४२ (१८)प्रदानवदेव तदुक्तम् ॥

४३ (१९)लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥

४४ (२०)पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥

४५ अतिदेशाच्च ॥

४६ विद्यैव तु निर्धारणाद्दर्शनाच्च[7] ॥

४७ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥

४८ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्[8] ॥

४९ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥

५० परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥

५१ (२१)एक आत्मनः शरीरे भावात् ॥

---

१ केचित् ३१-३२ सूत्रे व्युत्क्रमं पठन्ति ।

२ स्वविरोध इतिकश्चित्पठति ।

३ स्वात्मन इत्यस्य स्थाने तदुक्तमिति कश्चित्पठति ॥

४ केचिदन्यथेत्यादि पृथक्पठन्तः चेन्नोपदेशान्तरवदिति पठन्ति । कश्चित्तु सूत्रान्तरीकृत्याप्युपदेशवदित्येव पठति ॥

५ कामादि इति कश्चित् पठति ।

६ तन्निर्धारणार्थं इति कश्चित् पठति ।

७ केचिद्दर्शनाच्चेति पृथक्कुर्वन्ति ।

८ कश्चित्प्रज्ञान्तरेत्यादि पृथक्सूत्रं पठति । तन्मते वद्दृष्टिश्चेति पाठः ।

५२ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥
५३ (२२)अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥
५४ मन्त्रादिवद्वाऽविरोधः ॥
५५ (२३)भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥
५६ (२४)नाना शब्दादिभेदात् ॥
५७ (२५)विकल्पोऽविशिष्टफलत्वात् ॥
५८ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥
५९ (२६)अङ्गेषु यथाश्रयभावः[१] ॥
६० शिष्टेश्च ॥
६१ समाहारात् ॥
६२ गुणसाधारण्यश्रुतेश्च ॥
६३ न वा तत्सहभावाश्रुतेः ॥
६४ दर्शनाच्च ॥

इति तृतीयाध्यायस्य तृतीयः पादः ।

— ०—

१ (१)पुरुषार्थोऽतः शब्दादिति बादरायणः ॥
२ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥
३ आचारदर्शनात् ॥
४ तच्छ्रुतेः ॥
५ समन्वारम्भणात् ॥
६ तद्वतो विधानात् ॥
७ नियमाच्च ॥
८ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥
९ तुल्यन्तु दर्शनम् ॥
१० असार्वत्रिकी ॥
११ विभागः शतवत् ॥
१२ अध्ययनमात्रवतः ॥
१३ नाविशेषात् ॥
१४ स्तुतयेऽनुमतिर्वा ॥
१५ कामकारेण चैके ॥
१६ उपमर्दञ्च ॥
१७ ऊर्ध्वरेतःसु च शब्दे हि ॥
१८ परामर्शं जैमिनिरचोदना चापवदति हि ॥
१९ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥
२० विधिर्वा धारणवत् ॥
२१ (२)स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥

---

१ याभावि इति केचित् पठन्ति । २ भावादिति कश्चित् पठति ॥

२२ भावशब्दाच्च[1] ॥

२३ (३)पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥

२४ तथा चैकवाक्यतोपबन्धात् ॥

२५ (४)अत एव चाऽग्नीन्धनाद्यनपेक्षा ॥

२६ (५)सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥

२७ (६)शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥

२८ (७)सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥

२९ अबाधाच्च ॥

३० अपि[4] स्मर्यते ॥

३१ शब्दश्चातोऽकामकारे[5] ॥

३२ (८)विहितत्वाच्चाश्रमकर्मापि ॥

३३ सहकारित्वेन च ॥

३४ सर्वथापि[6] त एवोभयलिङ्गात् ॥

३५ अनभिभवञ्च दर्शयति ॥

३६ (९)अन्तरा चापि तु तद्दृष्टेः ॥

३७ अपि[7] स्मर्यते ॥

३८ विशेषानुग्रहश्च[8] ॥

३९ अतस्त्वितरज्ज्या[9]यो लिङ्गाच्च ॥

४० (१०)तद्भूतस्य तु नातद्भावो[10] जैमिनेरपि नियमात्[11]द्रूपाभावेभ्यः ॥

४१ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥

४२ उपपूर्वमपीत्येके[12] भावमशनवत् तदुक्तम् ॥

४३ बहिस्तूभयथापि स्मृतेराचाराच्च ॥

---

१ इदं सूत्रं कश्चिन्न पठति ।
२ चकारं कश्चिन्न पठति ।
३ अपिकारं केचिन्न पठन्ति ।
४ अपिचेति केचित् पठन्ति ।
५ कारे इति कश्चित् पठति ।
६ सर्वथापि तु इति कश्चित् पठति ।
७ अपिचेति केचित् पठन्ति ।
८ हश्चेति कश्चित् पठति ।
९ तरज्ज्या इति कश्चित् पठति ।
१० तु तद्भावो इति कश्चित् पठति ।
११ मात इति केचित् पठन्ति ।
१२ मपित्येके इति केचित् पठन्ति ।

४४ (११)स्वामिनः फलश्रुतेरित्यात्रेयः ॥

४५ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते१ ॥

४६ (१२)सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥

४७ कृत्स्नभावात्तु गृहिणोपसंहारः ॥

४८ मौनवदितरेषामप्युपदेशात् ॥

४९ (१३)अनाविष्कुर्वन्नन्वयात् ॥

५० ऐहिकमप्र२स्तुतप्रतिबन्धे तद्दर्शनात् ॥

५१ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥

इति तृतीयाध्यायस्य चतुर्थपादः ॥

—:०:—

अथ चतुर्थोऽध्यायः ।

१ (१)आवृत्तिरसकृदुपदेशात् ॥

२ लिङ्गाच्च ॥

३ (२)आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥

४ (३)न प्रतीके न हि सः ॥

५ ब्रह्मदृष्टिरुत्कर्षात् ॥

६ (४)आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥

७ (५)आसीनः सम्भवात् ॥

८ ध्यानाच्च ॥

९ अचलत्वं चापेक्ष्य ॥

१० स्मरन्ति च ॥

११ यत्रैकाग्रता तत्राविशेषात् ॥

१२ (६)आ प्रयाणात्३ तत्रापि हि दृष्टम् ॥

१३ (७)तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ।

१४ (८)इतरस्याप्येवमसंश्लेषः पाते तु ॥

१५ (९)अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥

१६ (१०)अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥

१७ अतोऽन्यापि ह्येकेषामुभयोः ॥

१८ यदेव विद्ययेति हि ॥

१९ (११)भोगेन त्वितरे क्षप-

---

१ केचिदेतत्सूत्रानन्तरं श्रुतेश्चेत्येकं सूत्रं पठन्ति ।

२ कमप्यप्र इति केचित् पठन्ति । ३ आप्रायणादिति केचित् पठन्ति ।

यित्वाऽथ संपद्यते[1] ॥

इति चतुर्थाध्यायस्य प्रथमः पादः॥

—:o:—

१ (१)वाङ्मनसि दर्शनाच्छब्दाच्च ॥
२ अत एव[2] सर्वाण्यनु ॥
३ (२)तन्मनः प्राण उत्तरात् ॥
४ (३)सोऽध्यक्षे तदुपगमादिभ्यः ॥
५ (४)भूतेषु तच्छ्रुतेः[3] ॥
६ नैकस्मिन् दर्शयतो हि ॥
७ (५)समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥
८ तदापीतेः संसारव्यपदेशात्॥
९ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः॥
१० नोपमर्देनातः ॥
११ अस्यैव चोपपत्तेरूष्मा[4] ॥
१२ प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्[5] ॥
१३ स्मर्यते च ॥
१४ (६)तानि परे तथा ह्याह ॥
१५ (७)अविभागो वचनात् ॥
१६ (८)तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥
१७ (९)रश्म्यनुसारी ॥
१८ (१०)निशि नेति चेन्न सम्बन्धस्य[6] यावद्देहभावित्वाद्दर्शयति च ॥
१९ (११)अतश्चायने ऽपि दक्षिणे ॥
२० योगिनः प्रति स्मर्यते[7] स्मार्ते चैते ॥

इति चतुर्थाध्यायस्य द्वितीयपादः॥

—:o:—

१ (१)अर्चिरादिना तत्प्रथितेः॥

---

१ क्षपयित्वासंपद्यते इति केचित् क्षपयित्वाथसंपरस्यत इति कश्चिच्च पठन्ति ॥ २ एवचेति केचित् पठन्ति ।
३ भूतेष्वतःश्रुतेरिति केचित् पठन्ति ॥
४ पत्तेरेषऊष्मा इति केचित् पठन्ति ॥
५ केचित्स्पष्ट इत्यादिकं पृथक्कुर्वन्ति ॥
६ संबन्धादिति कश्चित् पठति यावदित्यादि पृथक्करोति च ॥
७ प्रतिचस्मर्यत इति केचित् पठन्ति ॥

## सौत्री संख्या शुभाशीः ॥

| अध्यायः | पादः | सूत्राणि । |
|---|---|---|
| १ | १ | ३२ |
| १ | २ | ३३ |
| १ | ३ | ४४ |
| १ | ४ | २९ |
| २ | १ | ३६ |
| २ | २ | ४२ |
| २ | ३ | ५२ |
| २ | ४ | १९ |
| ३ | १ | २७ |
| ३ | २ | ४० |
| ३ | ३ | ६४ |
| ३ | ४ | ५१ |
| ४ | १ | १९ |
| ४ | २ | २० |
| ४ | ३ | १५ |
| ४ | ४ | २२ |

अखिलसूत्रसंख्या ५४५

# अधिकरणानुक्रमः ।

अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे तादर्थ्येऽनन्तरत्वे
ऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।

## तृतीयाध्यायद्वितीयपादे



## तृतीयाध्यायतृतीयपादे

१५६ सर्वाधिकरणसंख्या ॥



श्रीहयग्रीवाय नमः ॥

नमः परमर्षिभ्यः ॥

श्री१०८भगवद्रामानुजाचार्यानुगृहीतो

# वेदान्तदीपः ।

( मङ्गलाचरणम् । )

श्रियः कान्तोऽनन्तो वरगुणगणैकास्पदवपु-
र्हताशेषावद्यः परमखपदो (१) वाङ्मनसयोः ।
अभूमिर्भूमिर्यो नतजनदृशामादिपुरुषो
मनस्तत्पादाब्जे परिचरणसक्तं भवतु मे ॥
प्रणम्य शिरसाऽऽचार्यास्तदादिष्टेन वर्त्मना ।
ब्रह्मसूत्रपदान्तःस्थवेदान्तार्थः प्रकाश्यते ॥

( सिद्धान्तसंक्षेपः । )

अत्रेयमेव हि (२) वेदविदां प्रक्रिया—अचिद्वस्तुनः स्वरूपतः स्वभावतश्चात्यन्त(३)विलक्षणस्तदात्मभूतश्चेतनः प्रत्यगात्मा । तस्मादद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया कल्याणगुणैकतानतया च सर्वावस्थचिदचिद्व्यापकतया धारकतया (४) नियन्तृतया शेषितया चात्यन्तविलक्षणः परमात्मा । यथोक्तं (५) भगवता—

(१) 'परमविषयो' क० (२) 'एव हि' इति ग० पुस्तके नास्ति ।
(३) ' अत्यन्त ' इति क० पुस्तके नास्ति ।
(४) ' धारकतया ' इति ग० पुस्तके नास्ति । (५) 'तदुक्तं' ग०

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ " इति ॥

श्रुतिश्च " प्रधानक्षेत्रज्ञपतिर्गुणेशः । पतिं विश्वस्यात्मेश्वरम् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इत्यादिका । कूटस्थो मुक्तस्वरूपम् ।

" ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ "

इत्यादिव्यपदेशात् । सूत्रकारश्चैव(१)मेव वदति "नेतरोऽनुपपत्तेः। भेदव्यपदेशात्। अनुपपत्तेस्तु न शारीरः। कर्मकर्तृव्यपदेशाच्च । शब्दविशेषात्। संभोगप्राप्तिरिति चेन्न वैशेष्यात्। न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च । उभयेऽपि हि भेदेनैनमधीयते। विशेषणभेदव्यपदेशाभ्यां च नेतरौ। मुक्तोपसृप्यव्यपदेशाच्च । स्थित्यदनाभ्यां च । इतरपरामर्शात्स इति चेन्नासंभवात् ।उत्तराच्चेदाविर्भूतस्वरूपस्तु। सुषुप्त्युत्क्रान्त्योर्भेदेन। पत्यादिशब्देभ्यः। अधिकं तु भेदनिर्देशात्। आधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्। जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । भोगमात्रसाम्यलिङ्गाच्च" इत्यादिभिः । न चाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशाः ।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।

---

(१) ' ह्येद ' क०

सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥
तदा (१) विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । मुक्तोपसृप्यव्यपदेशाच्च । उत्तराच्चेदाविर्भूतस्वरूपस्तु । संपद्याविर्भावः स्वेन शब्दात् । जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । भोगमात्रसाम्यलिङ्गाच्च" इति सर्वाविद्योपाधिविनिर्मुक्तमधिकृत्यैव(२) भेदोपपादनात् । श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदनिर्देशे (३) चिदचिदीश्वरस्वरूपभेदः स्वाभाविको विवक्षित इति निश्चीयते । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो । क्षेत्रज्ञं चापि मां विद्धि । तदनन्यत्वमारम्भणशब्दादिभ्यः" इति परस्य ब्रह्मणः कारणत्वं कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य कार्यत्वं कारणात्कार्यस्यानन्यत्वं चोच्यमानमेवमेवोपपद्यते । सर्वावस्थस्य चिदचिद्वस्तुनः परमात्मशरीरत्वं परमात्मनश्चात्मत्वं "यः पृथिव्यां तिष्ठन्–यस्य पृथिवी शरीरम् । य आत्मनि तिष्ठन्–यस्यात्मा शरीरं य आत्मानमन्तरो यमयति । यस्याव्यक्तं शरीरम्–यस्याक्षरं शरीरम्—यस्य मृत्युः शरीरमेष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिश्रुत्यैवोपदिष्टमिति सूक्ष्मचिदचिद्वस्तुशरीरः परमात्मा कारणम्, स एव परमात्मा

---

(१) 'उभे' क० (२) 'विनिर्मुक्तस्यैव' ग०
(३) 'भेदे निर्दिष्टे' मु०

स्थूलचिदचिद्वस्तुशरीरः कार्यमिति कारणावस्थायां कार्यावस्थायां च चिदचिद्वस्तुशरीरतया (१) तत्प्रकारः (२) परमात्मैव सर्वशब्दवाच्य इति परमात्मशब्देन सर्वशब्दसामानाधिकरण्यं मुख्यमेवोपपन्नतरम् । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवत्" इति(३)श्रुतिरेवमर्थमुपपादयति । सर्वमात्म(४)तयाऽनुप्रविश्य तत्तच्छरीरत्वेन (५) सर्वप्रकारतया स एव सर्वशब्दवाच्यो भवतीत्यर्थः । बहु स्यामिति बहुभवनसंकल्पोऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतयैकधाऽवस्थितस्य विभक्तनामरूपचिदचिद्वस्तुशरीरकतया (६) बहुप्रकारता विषयः—इति हि वेद(७)वित्प्रक्रिया ॥

( शङ्कर-भास्करमतप्रतिक्षेपः । )

ये पुनर्निर्विशेषकूटस्थस्वप्रकाशनित्यचैतन्यमात्रं ब्रह्म ज्ञातव्यतयोक्तमिति वदन्ति तेषां "जन्माद्यस्य यतः । शास्त्रयोनित्वात् । तत्तु समन्वयात् । ईक्षतेर्नाशब्दम्" इत्यादि(८)-"जगद्व्यापारवर्जम् (९)। भोगमात्रसाम्यलिङ्गाच्च । अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्यन्तस्य सूत्र(१०)-गणस्य ब्रह्मणो जगत्कारणत्वबहुभवनसङ्कल्परूपेक्षणाद्यनन्तविशेषप्रतिपादनपरत्वात्सर्वं सूत्रजातं सूत्रकारोदाहृताः "यतो वा इमानि भूतानि जायन्ते । तदैक्षत बहु स्यां प्रजाये-

(१) ‘शरीरकतया’ मु०
(२) ‘तत्तत्प्रकारः’ ग०
(३) ‘ इत्यादि ’ मु०
(४) ‘ सर्वात्मतया ’ ग०
(५) ‘ तच्छरीरत्वेन ’ क०
(६) ‘ शरीरतया ’ मु०
(७) ‘ वेदान्त ’ ग०
(८) ‘ इत्यादेः ’ मु०
(९) मुद्रितपुस्तके संपूर्णं सूत्रमास्ति।
(१०) ‘ इत्यन्त[illegible] ’ [illegible]

य" इत्याद्याः सर्वाः श्रुतयश्च न संगच्छन्ते । अथोच्येत "येनाश्रुतं श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "यथा सोम्यैकेन मृत्पिण्डेन" इत्येकमृत्पिण्डारब्धघटशरावादीनां तन्मृत्पिण्डादनन्यतया(१) तद्ज्ञानेनैव(२) तेषां ज्ञाततेव ब्रह्मज्ञानेन तदारब्धस्य कृत्स्नस्य चिदचिदात्मकस्य जगतस्तद(३)नतिरिक्तवस्तुतया ज्ञातता संभवतीत्युपपाद्य "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इतीदंशब्दवाच्यस्य चिदचिदात्मकप्रपञ्चस्य सृष्टेः प्राङ्निखिलभेदप्रहाणेन सच्छब्दवाच्यतयैकता(४)ऽऽपत्तिं घटशरावाद्युत्पत्तेः प्रागुत्पादकमृत्पिण्डैकता(५)ऽऽपत्तिवदभिधाय "तदैक्षत बहु स्यां प्रजायेय" इति(६)तदेव सच्छब्दवाच्यं परं ब्रह्म चिदचिदात्मकप्रपञ्चरूपेणात्मनो बहुभवनमेकमृत्पिण्डस्य घटशरावादिरूपेण बहुभवनवत्संकल्प्यात्मानमेव तेजःप्रभृतिजगदाकारेणासृजतेति चाभिधाय "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इत्यभिधानाद्ब्रह्मैकमेवाविद्याकृतेन पारमार्थिकेन वो(७)पाधिना संबद्धं देवादिरूपेण बहुभूतमिति वैदिकै(८)रभ्युपगन्तव्यमिति । तदयुक्तम्(९) । "ज्ञाज्ञौ द्वावजावीशनीशौ । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिश्रुतिभिर्जीवानामजत्वनित्यत्वबहुत्ववचनात् । यदि घटशरावादेरुत्पत्तेः प्रागेकीभूतस्य मृद्द्रव्यस्योत्प-

(१) 'मृत्पिण्डादनन्यतया' ग० 'तन्मृत्पिण्डादनन्यद्रव्यतया' मु०
(२) 'एव' इति मुद्रिते नास्ति । (३) 'तस्माद' मु०
(४) 'सच्छब्दवाच्यतयैकधा' ग० 'सच्छब्दवाच्येनैकता' मु०
(५) 'मृत्पिण्डैकधा' ग०
(६) "बहु स्याम्" इति' इत्येवास्ति मुद्रिते ।
(७) 'कृतेनापारमार्थिकेन चो' क० ग० (८) 'वेदविद्भि' मु०
(९) 'मिति यत्तदयुक्तम्' ग०

न्युत्तरकालभाविबहुत्ववत्सृष्टेः प्रागेकीभूतस्यैव ब्रह्मणः सृष्ट्युत्तरकालं(१) नानाविधजीवरूपेण बहुत्वमुच्येत, तदा जीवानामजत्वनित्यत्वबहुत्वादि विरुध्येत । सूत्रविरोधश्च "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति ब्रह्मैव देवमनुष्यादिजीवरूपेण(२) बहुभूतं चेत्त(३)दाऽऽत्मनो हिताकरणादिदोषप्रसक्तिरित्युक्त्वा "अधिकं तु भेदनिर्देशात्" इति जीवाद्ब्रह्मणोऽर्थान्तरत्वमुक्तम् । तथा च "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति देवादिविविषमसृष्टिप्रयुक्तपक्षपातनैर्घृण्ये (४) जीवानां पूर्वपूर्वकर्मापेक्षत्वाद्विषमसृष्टेरिति परिहृते । तथा(५)"न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति सृष्टेः प्रागविभागवचनात्सृष्टेः प्राग्जीवानामभावात्तत्कर्म न सम्भवतीति परिचोद्य(६) जीवानां तत्कर्मप्रवाहाणां चानादित्वादिति परिहृतम् । "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इत्यात्मन उत्पत्त्यभावश्चोक्तः।नित्यत्वं च । स्वाभ्युपगमविरोधश्च।आमोक्षाज्जीवभेदस्यानादित्वं सर्वैरेव हि वेदान्तवादिभि(७)रभ्युपगम्यते। अतः श्रुतिविरोधात्सूत्रविरोधात्स्वाभ्युपगमविरोधाच्च सृष्टेः प्रागेकत्वावधारणं नामरूपविभागाभावाभिप्रायम्, नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुभेद(८)सद्भ्‌वेति सर्वैरभ्युपगम्यते । इयांस्तु विशेषः।अविद्यापरिकल्पनेऽ-

(१) 'कालीनं' मु०  (२) 'स्वरूपेण' मु०
(३) 'तदा' इति मुद्रिते नास्ति।
(४) 'नैर्घृण्ये न' क० 'नैर्घृण्ये न सापेक्षत्वादिति' ग०
(५) 'तथा' इति क० पुस्तके नास्ति।
(६) 'परिचोद्य' इति ग० पुस्तके नास्ति।
(७) 'वेदान्तिभि' मु०  (८) 'चिदचिद्वस्तुशक्तिभेद' मु०

स्युपाधिपरिकल्पनेऽपि ब्रह्मव्यतिरिक्तस्याविद्यासंबन्धिनश्चोपाधिसंबन्धिनश्च चेतनस्याभावादविद्योपाधिसंबन्धौ (१) तत्कृताश्च दोषा ब्रह्मण एव (२) भवेयुरिति ॥

( यादवसिद्धान्तविमर्शः । )

सन्मात्रब्रह्मवादेऽपि प्राक्सृष्टेः सन्मात्रं ब्रह्मैकमेव सृष्ट्युत्तरकाले भोक्तृभोग्यनियन्तृरूपेण त्रिधा भूतं घटशरावमणिकवज्जीवेश्वरयोरप्यु(३)त्पत्तिमत्त्वमनित्यत्वं च स्यात्। अथैकत्वा(४)पत्तिवेलायामपि भोक्तृभोग्यनियन्तृशक्तित्रयमवस्थितमिति चेत्, किमिदं शक्तित्रयपद(५)वाच्यमिति विवेचनीयम्। यदि सन्मात्रस्यैकस्यैव भोक्तृभोग्यनियन्तृरूपेण परिणामसामर्थ्यं शक्तित्रयशब्दवाच्यम्, एवं तर्हि मृत्पिण्डस्य घटशरावादिपरिणामसमर्थस्य तदुत्पादकत्वमिव ब्रह्मण ईश्वरादीनामुत्पादकत्वमिति तेषामनित्यत्वमेव । अथेश्वरादीनां सूक्ष्मरूपेणावस्थितिरेव शक्तिरित्युच्येत । तर्हि तदतिरिक्तस्य सन्मात्रस्य ब्रह्मणः प्रमाणाभावात्तदभ्युपगमे च तदुत्पाद्यतयेश्वरादीनामनित्यत्वप्रसङ्गाच्च त्रयाणां नामरूपविभागानर्हसूक्ष्मदशाऽऽपत्तिरेव प्राक्सृष्टेरेकत्वा(६)वधारणावसेयेति वक्तव्यम् । न तदा तेषां ब्रह्मात्मकत्वा (७)देकत्वावधारणं विरुद्ध्येत ॥ अतः सर्वावस्थस्य(८) चिदचिद्वस्तुनो ब्रह्मशरीरत्वश्रुतेः सर्वदा सर्वशब्दैर्ब्रह्मैव तत्तच्छ-

---

(१) 'संबन्धेन' क० (२) 'ब्रह्मण्येव' ग०
(३) 'अपि' इति मुद्रिते नास्ति । (४) 'एकता ऽऽ'क० 'एकधा ऽऽ'ग०
(५) 'शब्द' मु० (६) 'एकधा ऽ'ग०
(७) 'अन्यथा तेषामब्रह्मात्मकत्वा' क० 'तथा तेषामब्रह्मात्मकत्वा' ग० 'तदा तेषां बहुत्वा' पा०
(८) 'सर्वावस्थावस्थितस्य' मु०

रीरतया तत्तद्विशिष्टमेवाभिधेयमिति(१)स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्मैव कार्यभूतं जगत्, नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म कारणमिति । तदेव मृत्पिण्डस्थानीयम् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युच्यते । तदेव विभक्तनामरूपचिदचिद्वस्तुविशिष्टं ब्रह्म कार्यमिति सर्वं समञ्जसम् ॥

श्रुतिन्यायाविरोधस्तु तेषां भाष्ये मपाञ्चित इति नेह मतन्यते । भाष्योदितो ऽधिकरणार्थः ससूत्रविवरणः सुख(२)ग्रहणाय संक्षेपेणोपन्यस्यते ॥

( संक्षेपतः प्रमेयकथनम् । )

तत्र प्रथमे पादे प्रधानपुरुषावेव जगत्कारणतया वेदान्ताः प्रतिपादयन्तीत्याशङ्क्य सर्वज्ञं सत्यसंकल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम् । द्वितीयतृतीयचतुर्थपादेषु कानि चिद्वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम् । तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये निरूपितानि, स्पष्टलिङ्गकानि तृतीये, चतुर्थे तु प्रधानादिप्रतिपादनच्छायानुसारीणीति विशेषः।अतः प्रथमेऽध्याये सर्वं वेदान्तवाक्यजातं सर्वज्ञत्वसत्यसंकल्पत्वादियुक्तं ब्रह्मैव जगत्कारणतया प्रतिपादयतीति स्थापितम् । द्वितीयेऽध्याये ऽस्यार्थस्य दुर्धर्षत्वप्रतिपादनेन द्रढिमोच्यते । तत्र प्रथमे पादे सांख्यादिस्मृतिविरोधान्न्यायविरोधाच्च प्रसक्तो दोषः परिहृतः।द्वितीये सांख्यादिवेदबाह्यपक्षप्रतिक्षेपमुखेनास्यैवादरणीयता स्थिरीकृता । तृतीयचतुर्थयोर्वेदान्तवाक्यानामन्योन्यविप्र-

(१) 'अभिधीयत इति' मु०

(२) 'सूत्रविवरणसुख' क० ग० 'सूत्रार्थविवरणसुख' पा०

तिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्य्यताप्रकारो विशोध्यते । तत्र तृतीये पादे चिद (१) चित्प्रतञ्चस्य ब्रह्मकार्य्यत्वे सत्यप्यचिदंशस्य स्वरूपान्यथाभावेन कार्यत्वम्, चिदंशस्य स्वभावान्यथाभावेन ज्ञानसंकोच विकासरूपेण (२) कार्य्यतोदिताचतुर्थे तु जीवोपकरणानामिन्द्रियादीनामुत्पत्तिप्रकारः। इति प्रथमेनाध्यायद्वयेन मुमुक्षुभिरुपास्यं निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं निखिलजगदेककारणं ब्रह्मेति प्रतिपादितम्। उत्तरेण द्विकेन ब्रह्मोपासनप्रकारस्तत्फलभूतं मोक्षस्वरूपं च चिन्त्यते । तत्र तृतीयाध्यायस्य प्रथमे पादे ब्रह्मोपासिषोत्पत्तये जीवस्य संसरतो दोषाः प्रकीर्त्तिताः । द्वितीये चोपासनोत्पत्तये ब्रह्मणो निरस्तनिखिलदोषता—कल्याणगुणाकरतारूपोभयलिङ्गता प्रतिपाद्यते। तृतीयेतु ब्रह्मोपासनैकत्वनानात्वपूर्वकमुपासनेपूपसंहार्य्यानुपसंहार्य्यगुणविशेषाः प्रपञ्चिताः । चतुर्थे तूपासनस्य वर्णाश्रमधर्मेतिकर्त्तव्यताकत्वमुक्तम् । चतुर्थेऽध्याये ब्रह्मोपासनफलचिन्ता क्रियते। तत्र प्रथमे पादे ब्रह्मोपासनफलं वक्तुं उपासनस्वरूप(३)पूर्वकोपासनप्रकारो विद्यानुष्ठान(४)माहात्म्यं चोच्यते। द्वितीये तु ब्रह्मोपासिनां ब्रह्मप्राप्तिगत्युपक्रम(५)प्रकारश्चिन्त्यते। तृतीये चार्चिरादिस्वरूपम्, अर्चिरादिनैव ब्रह्मप्राप्तिरिति प्रतिपाद्यते। चतुर्थे तु मुक्तस्य ब्रह्मानुभवप्रकारश्चिन्त्यते।अतो मुमुक्षुभिर्ज्ञातव्यं निरस्तनिखिलदोषगन्धानवधिकातिश-

(१) 'वियदादिचिद' क०

(२) 'चिदंशस्य स्वरूपान्यथाभावाभावेन ज्ञानसङ्कोचविकासरूपेणान्यथाभावेन' क०

(३) 'स्वरूपविचार' मु० (४) 'अनुष्ठान' पदं नास्ति ग० पुस्तके।

(५) 'गत्युक्त' ग०

यासंख्येयकल्याणगुणगणाकरं निखिलजगदेककारणं परं ब्रह्म-ज्ञानं (१) च मोक्षसाधनमसकृदावृत्तं स्मृतिसन्तानरूपमुपासनात्मकम्, उपासनाफलं चार्चिरादिना परं ब्रह्मोपपद्य स्वेन रूपेण स्वरूपभूतज्ञानादिगुणाविर्भावपूर्वकानन्तमहाविभूत्यनवधिकातिशयानन्दब्रह्मानुभवोऽपुनरावृत्तिरूप इति शारीरकशास्त्रेणोक्तं भवति ॥

( जिज्ञासाऽधिकरणम् । )

अथातो ब्रह्मजिज्ञासा ॥ १ ॥

ब्रह्ममीमांसा विषयः ॥ सा किमारम्भणीयोतानारम्भणीयेति संशयः॥ तदर्थं परीक्ष्यते वेदान्ताः किं ब्रह्मणि प्रमाणमुत नेति । तदर्थं परीक्ष्यते परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्यावधारणं संभवति न वेति (२) । न संभवतीति पूर्वपक्षः । संभवतीति राद्धान्तः । यदि (३) न संभवति तदा परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्याभावात्सिद्धस्वरूपे ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाराकारा ब्रह्ममीमांसा नारम्भणीया । यदा संभवति तदा सिद्धेऽप्यर्थे शब्दस्य बोधनसामर्थ्यसंभवाद्वेदान्ताः ब्रह्मणि प्रमाणमिति सा चारम्भणीया स्यात् ॥ तत्र पूर्वपक्षवादी मन्यते—वृद्धव्यवहारादन्यत्र व्युत्पत्त्यसंभवात् व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्य्य एवार्थे शब्दशक्त्यवधारणात् परिनिष्पन्नेऽर्थे (४) ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाररूपा ब्रह्ममीमांसा नारम्भणीयेति ॥ राद्धान्तस्तु—बालानां मातापितृप्रभृतिभिरम्बातातमातुलशशिपशुमृगादि

---

(१) 'तज्ज्ञानं' मु०　　(२) 'नेति' मु०
(३) 'यदा' मु०　　(४) 'अर्थे' इति क० पुस्तकेस्ति ।

प्वङ्गुल्या (१) निर्दिश्य तत्तदभिधायकशब्दान्प्रयुञ्जानैः क्रमेण बहुशः शिक्षितानां तत्तच्छब्दश्रवणसमनन्तरं स्वात्मनामेव तत्तदर्थबुद्ध्युत्पत्तिदर्शनाच्छब्दार्थयोः संबन्धान्तरादर्शनात्संकेतयितृपुरुषाज्ञानाच्च बोध्यबोधकभाव एव शब्दार्थयोः संबन्ध इति निश्चिन्वानानां परिनिष्पन्नेऽप्यर्थे शब्दस्य बोधकत्वावधारणं संभवतीति ब्रह्मणि वेदान्तानां (२) प्रामाण्यात्तदर्थविचाराकारा ब्रह्ममीमांसाऽऽरंभणीयेति ॥ सूत्रार्थः (३)—अथेत्यानन्तर्येऽ।अत इति च वृत्तस्य हेतुभावे।ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ज्ञातुमिच्छा जिज्ञासा । इच्छायाः इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिहाभिप्रेतम् । पूर्ववृत्तादल्पास्थिरफलकेवलकर्माधिगमादनन्तरं तत एव हेतोरनन्तास्थिरफलब्रह्माधिगमः कर्त्तव्य इति ॥

( जन्माद्यधिकरणम् । )

जन्माद्यस्य यतः ॥ २ ॥

तैत्तिरीयके "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" इत्येतद्वाक्यं विषयः ॥ किमेतज्जिज्ञास्यतया प्रतिज्ञातं ब्रह्म जगज्जन्मादिकारणतया लक्षणतः प्रतिपादयितुं शक्नोति न वेति संशयः ॥ न शक्नोतीति पूर्वपक्षः । कुतः । जगज्जन्मादीनामुपलक्षणतया विशेषणतया च (४) ब्रह्मलक्षणत्वासंभवात् । उपलक्षणत्वे ह्युपलक्षितस्याकारान्तरयोगोऽपेक्षितः । न चेह तदस्ति । अत उपलक्षणत्वं न संभवति । विशेषणत्वेऽप्यनेक-

(१) 'अङ्गुल्यादिना' ग०   (२) 'वेदान्तवाक्यानां' मु०
(३) 'सूत्रार्थः—अथातो ब्रह्मजिज्ञासा—अथे' मु० क०
(४) 'वा' मु०

विशेषणविशिष्टतयाऽपूर्वस्यैकस्य प्रतिपादकत्वं न संभवति । विशेषणानां व्यावर्तकत्वेन विशेषणबहुत्वे ब्रह्मबहुत्वप्रसक्तेः॥ राद्धान्तस्तु–एकस्मिन्नविरुद्धानां विशेषणानामनेकत्वेऽपि श्यामत्वयुवत्वादिविशिष्टदेवदत्तवज्जन्मादिविशिष्टं ब्रह्मैकमेव भवति । उपलक्षणत्वे ऽपि जगज्जन्मादिभिरुपलक्षितस्य ब्रह्मशब्दावगतबृहत्त्वाद्याकाराश्च सन्तीति जगज्जन्मादिकारणं ब्रह्मेति लक्षणतः प्रतिपादयितुं शक्नोतीति॥ सूत्रार्थः–अस्य विविधविचित्रभोक्तृभोग्यपूर्णस्य जगतः यतो जन्मादि तद्ब्रह्मेति प्रतिपादयितुं शक्नोत्येतद्वाक्यमिति ॥

( शास्त्रयोनित्वाधिकरणम् । )

## शास्त्रयोनित्वात् ॥ ३ ॥

"यतो वा इमानि(१)" इत्यादिवाक्यमेव विषयः ॥ तत्किं जगत्कारणे ब्रह्मणि शास्त्रं (२) प्रमाणमुत नेति संशयः ॥ नैतत्प्रमाणमिति पूर्वपक्षः। कुतः । अनुमानसिद्धब्रह्मविषयत्वात्। प्रमाणान्तराविषये हि शास्त्रं प्रमाणम्(३)।जगतः सावयवत्वेन कार्य्यत्वात्कार्य्यस्य च स्वोपादानोपकरणसंप्रदानप्रयोजनाद्य(४)भिज्ञकर्तृकत्वाज्जगन्निर्माणचतुरः कर्म्मपरवशपरिमितशक्त्यादिक्षेत्रज्ञविलक्षणः सर्वज्ञः सर्वशक्तिः(५)सर्वेश्वरोऽनुमानसिद्ध इति न तस्मिन्"यतो वा इमानि भूतानि" इत्यादि वाक्यं प्रमाणमिति ॥राद्धान्तस्तु–जगतः कार्य्यत्वेऽप्येकदैवैकेन कृत्स्नं

(१) 'इमानि भूतानि' इत्या' मु०

(२) तच्छास्त्रमित्यन्वयः । 'शास्त्रम्' इति नास्ति मुद्रिते ।

(३) "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इति वचनादिति बोध्यम्।

(४) 'नाभिज्ञ' ग०  (५) 'सर्वशक्त' मु०

जगन्निर्मितमिति(१)प्रमाणाभावात्,क्षेत्रज्ञानामेव विलक्षणपुण्यानां ज्ञानशक्तिवैचित्र्यसंभावनया कदाचित्कस्यचि (२)ज्जगदेकदेशनिर्माणसामर्थ्यसंभवात् तदतिरिक्तपुरुषानुमानं न संभवतीति शास्त्रैकप्रमाणत्वाद्ब्रह्मणः "यतो वा इमानि" इत्यादिवाक्यं ब्रह्मणि प्रमाणमिति (३)॥ सूत्रार्थस्तु—शास्त्रं यस्य योनिः कारणं प्रमाणं तद्ब्रह्म शास्त्रयोनि । तद्बुद्धिकारणत्वेन शास्त्रस्य योनित्वम्(४)। प्रमाणान्तराविषयत्वेन शास्त्रैकप्रमाणकत्वाद्ब्रह्मणस्तत्प्रतिपादकत्वेन तस्मिन् "यतो वा इमानि" इत्यादि वाक्यं प्रमाणमिति॥

( समन्वयाधिकरणम् । )

## तत्तु समन्वयात् ॥ ४ ॥

ब्रह्मणः शास्त्रप्रमाणकत्वं संभवति न वेति(५)विचार्य्यते॥न संभवतीति पूर्वपक्षः । कुतः । प्रवृत्तिनिवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेणापुरुषार्थत्वात्पुरुषार्थावबोधित्वेन (६) च शास्त्रप्रामाण्यान्मोक्षसाधनब्रह्मध्यानविधिपरत्वेऽप्यसत्यपि ब्रह्मणि तद्ध्यानविधानसंभवान्न ब्रह्मसद्भावे तात्पर्य्यमिति ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति ॥ राद्धान्तस्तु—अतिशयितगुणपितृपुत्रादिजीवनज्ञानवदनवधिकातिशयानन्दस्वरूपब्रह्मज्ञानस्य निरतिशयपुरुषार्थत्वात्तस्य शास्त्रप्रमाणकत्वं संभवति । "आनन्दो ब्रह्म । यदेष आकाश आनन्दो न स्यात् ।

(१) 'मित्यत्र' मु०

(२) 'कस्य चित्' इति क० ग० पुस्तकयोर्नास्ति ।

(३) 'शास्त्रैकप्रमाणकत्वाद्ब्रह्मणस्तत्प्रतिपादकत्वेन तस्मिन् "यतो वा इमानि" इति वाक्यं प्रमाणमिति' मु० । 'न संभवति' इत्यनन्तरं सूत्रार्थपर्यन्तं स्थितो ग्रन्थो नास्ति क० पुस्तके।

(४) 'तद्बुद्धि' इत्यादि पङ्क्तिर्मुद्रिते नास्ति ।

(५) 'नेति' मु०

(६) 'बोधकत्वेन' मु०

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्" इत्येवमादिभि(१)रनवधिकातिशयानन्दस्वरूप(२) ब्रह्मेति हि प्रतिपाद्यते। अतो ब्रह्म स्वेन परेण वाऽप्यनुभूयमानं निरतिशयानन्दस्वरूपमेवेति तत्प्रतिपादनपरस्यैव साक्षात्पुरुषार्थान्वयः। प्रवृत्तिनिवृत्तिपरस्य तु तत्साध्यफलसंबन्धात् पुरुषार्थान्वय इति ॥ सूत्रार्थस्तु—तु शब्दः प्रसक्ताऽऽशङ्कानिवृत्त्यर्थः। तत्पूर्वसूत्रोदित ब्रह्मणः शास्त्रयोनित्वं समन्वयात्सिद्ध्यति। सम्यक् पुरुषार्थतयाऽन्वयः समन्वयः। वेदितु(३)र्निरतिशयानन्दरूपत्वेन परमपुरुषार्थरूपे ब्रह्मणि वेदकतया शास्त्रस्यान्वयात्(४) ब्रह्मणः शास्त्रप्रमाणकत्वं सिद्ध्यत्येवेति ॥

( ईक्षत्यधिकरणम्। )

इक्षतेर्नाशब्दम् ॥ ५ ॥

जगत्कारणवादि वेदान्तवेद्यं विषयः ॥ तत्किं सांख्योक्तं प्रधानमुतानवधिकातिशयानन्दं ब्रह्मेति संशयः ॥ प्रधानमिति पूर्वपक्षः। कुतः। प्रतिज्ञादृष्टान्तान्वयेनानुमानाकारवाक्यवेद्यत्वात् (५)। "येनाश्रुतं श्रुतं भवति" इत्यनेनै (६)-कविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "यथा सोम्यैकेन मृत्पिण्डेन" इति दृष्टान्तेन ह्युपपाद्यते। एवमानुमानिकमेवैतद्वाक्यवेद्यमिति निश्चीयते (७)। "सदेव सोम्य" इति सच्छब्दः प्रधानविषयः। "तदैक्षत बहुस्याम्" इति च गौणमीक्षणं भवितुमर्ह-

(१) 'इत्यादिभि' मु० (२) 'रूप' ग० (३) 'वेत्तु' ग०
(४) 'परमपुरुषार्थतया वेद्यत्वेनान्वयात्' क० 'परमपुरुषार्थतया वेद्यत्वेनान्वयत्वेनान्वयात्' पा०
(५) 'वाक्ये वेद्यत्वात्' ग० (६) 'इत्यादिनैक' ग० मु०
(७) 'निश्चिते सति' पा०

ति।"तत्तेज ऐक्षत" इत्यादिगौणेक्षणसाहचर्य्याच्च ॥ राद्धान्तस्तु-"तदैक्षत बहुस्याम्" इति बहुभवनसंकल्परूपेक्षणान्वयात् "सदेव सोम्येदम्" इति कारणवाचिसच्छब्दविषयो नाचेतनं प्रधानम्। अपि तु सार्वज्ञ्यसत्यसंकल्पत्वादियुक्तं परं(१)ब्रह्मैवेति निश्चीयते। न चानुमानाकारमेतद्वाक्यं हेत्वनुपादानात् (२) । अन्य (३)-ज्ञानेनान्यज्ञानासंभवपरिजिहीर्षया तु दृष्टान्तोपादानम् । न च मुख्येक्षणासंभवे गौणपरिग्रहसंभवः। तेजःप्रभृतिष्वपि न गौण-मीक्षणम् । तेजआदिशब्दानां तेजः प्रभृतिशरीरकस्यान्तर्य्यामिणो वाचकत्वादिति परमेव ब्रह्म जगत्कारणवाचिवेदान्तवेद्य-मिति ॥ सूत्रार्थः-इक्षतिरी(४)क्षतिधात्वर्थ ईक्षणम् । शब्द एव(५) प्रमाणं यस्य न भवति तदशब्दम्।परोक्तमानुमानिकं प्रधानम् । " सदेव सोम्येदम् " इति जगत्कारणतया प्रतिपादितान्वयिन ईक्षणव्यापाराज्ञाचेतनमशब्दं तत् । अपितु सर्वज्ञं सत्यसंकल्पं (६) ब्रह्मैव जगत्कारणमिति निश्चीयत इति ॥

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

"तत्तेज ऐक्षत" इत्यचेतनगतगौणेक्षण(७)साहचर्यात् "तदैक्षत"इत्यत्रेक्षति(८)र्गौण इति चेन्न।आत्मशब्दात्।सच्छब्दाभिहिते ईक्षितरि "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति श्रूयमाणाच्चेतनवाचिन आत्मशब्दादयमीक्षतिर्मुख्य एवेति प्रतीयते।"ऐत

(१) 'संकल्पत्वयुक्तं ब्रह्मैवेति' क० (२) ' हेत्वनुपदर्शनात् ' ग०
(३) 'तेनान्य ' ग० (४) ' इक्षतेरिती ' क०मु०
(५) ' एव ' कारो ग० मुद्रितपुस्तकयोर्नास्ति ।
(६) ' सर्वज्ञं परं ' ग० पा०
(७) ' गौणशब्दसाह ' ग० (८) ' इतीक्षतिर्गौ ' क०

दात्मामिदं सर्वम्" इति तेजःप्रभृतीनामपि तदात्मकत्वावगमा-त्तेजःप्रभृतीक्षणमपि मुख्यमेवेत्यभिप्रायः ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

इतश्च सच्छब्दाभिहितं न प्रधानम् । अपि तु परमेव ब्रह्म। "तत्त्वमसि" इति सदात्मकतया प्रत्यगात्माऽनुसंधाननिष्ठस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति मोक्षोपदेशात्तत्कारणं परमेव ब्रह्म ॥

हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमिह कारणतया विवक्षितं तदा तस्य मोक्षविरोधित्वाद्धेयत्वमुच्येत । न चोच्यते । अतश्च न प्रधानम् ॥

प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानवादे (१) प्रतिज्ञा च विरुद्ध्यते (२)। "येनाश्रुतं श्रुतम्" इति वक्ष्यमाणकारणविज्ञानेन चेतनाचेतनमिश्रकृत्स्न-प्रपञ्चज्ञानं हि प्रतिज्ञातम् । चेतनांशं प्रति प्रधानस्याकारणत्वात्तज्ज्ञानेन चेतनांशो न ज्ञायत इति न प्रधानं कारणम् ॥

स्वाप्ययात् ॥ १० ॥

"स्वमपीतो भवति।सता सोम्य तदा संपन्नो भवति" इति जीवस्य सुषुप्तस्य स्वाप्ययः श्रूयते(३)।स्वकारणे ह्यप्ययः स्वाप्ययः। जीवं प्रति प्रधानस्याकारणत्वात्स्वाप्ययश्रुतिर्विरुद्ध्यते। अतश्च न प्रधानम् । अपि तु परब्रह्मैव ॥

---

(१) 'प्रधानकारणवादे' ग०
(२) 'विरुद्ध्येत' ग०
(३) स्वाप्ययश्रुतेः' मु०

गतिसामान्यात् ॥ ११ ॥

इतरोपनिषद्गतिसामान्यादस्यां चोपनिषदि न प्रधानं कारणं विवक्षितम्।इतरासु चोपनिषत्सु "यः सर्वज्ञः सर्ववित्-तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । स कारणं करणाधिपाधिपः।आत्मनि खल्वरे विज्ञाते(१) सर्वमिदं विज्ञातं भवति।तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः (२)। पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं । तस्माद्विराडजायत । आत्मा वा इदमेक एवाग्र आसीत्—स इमाल्लोँकानसृजत । तस्माद्वा एतस्मादात्मन आकाशः संभूतः ।एको ह वै नारायण आसीत् । स एकाकी नारमेत"इति सर्वज्ञः पुरुषोत्तम एवं कारणतया प्रतिपाद्यते । अस्याश्च तद्गतिसामान्यादत्रापि स एव कारणतया प्रतिपादनमर्हतीति । न च प्रधानम् ॥

श्रुतत्वाच्च ॥ १२ ॥

श्रुतमेवा (३) स्यामुपनिषदि "आत्मत एवेदं सर्वम्" इति । अतश्च "सदेव सोम्येदम्" इत्यादिजगत्कारणवादिवेदान्तवेद्यं न प्रधानम् । सर्वज्ञं सत्यसंकल्पं परमेव ब्रह्मेति (४) स्थितम् ॥

( आनन्दमयाधिकरणम् । )

आनन्दमयोऽभ्यासात् ॥ १३ ॥

तैत्तिरीयके " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इति प्रकृत्य " तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर

(१) ' विदिते ' ग०
(२) ' एतदृग्वेदः ' ग० । क० पुस्तके 'एतद्यदृग्वेदः' इत्यंशो नास्ति ।
(३) ' एव ह्यस्या ' क० (४) ' परं ब्रह्मेति ' ग०

दात्मामिदं सर्वम्" इति तेजःप्रभृतीनामपि तदात्मकत्वावगमा-त्तेजःप्रभृतीक्षणमपि मुख्यमेवेत्यभिप्रायः ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

इतश्च सच्छब्दाभिहितं न प्रधानम् । अपि तु परमेव ब्रह्म।"तत्त्वमसि" इति सदात्मकतया प्रत्यगात्माऽनुसधाननिष्ठस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति मोक्षोपदेशात्तत्कारणं परमेव ब्रह्म ॥

हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमिह कारणतया विवक्षितं तदा तस्य मोक्षविरोधित्वाद्धेयत्वमुच्येत । न चोच्यते । अतश्च न प्रधानम् ॥

प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानवादे (१) प्रतिज्ञा च विरुद्ध्यते (२)। "येनाश्रुतं श्रुतम्" इति वक्ष्यमाणकारणविज्ञानेन चेतनाचेतनमिश्रकृत्स्नप्रपञ्चज्ञानं हि प्रतिज्ञातम् । चेतनांशं प्रति प्रधानस्याकारणत्वात्तज्ज्ञानेन चेतनांशो न ज्ञायत इति न प्रधानं कारणम् ॥

स्वाप्ययात् ॥ १० ॥

"स्वमपीतो भवतिसता सोम्य तदा संपन्नो भवति" इति जीवस्य सुषुप्तस्य स्वाप्ययः श्रूयते(३)।स्वकारणे ह्यप्ययः स्वाप्ययः। जीवं प्रति प्रधानस्याकारणत्वात्स्वाप्ययश्रुतिर्विरुद्ध्यते। अतश्च न प्रधानम् । अपि तु परब्रह्मैव ॥

(१) 'प्रधानकारणवादे' ग०
(२) 'विरुद्ध्येत' ग०
(३) स्वाप्ययश्रुते.' मु०

## गतिसामान्यात् ॥ ११ ॥

इतरोपनिषद्गतिसामान्यादस्यां चोपनिषदि न प्रधानं कारणं विवक्षितम्। इतरासु चोपनिषत्सु "यः सर्वज्ञः सर्ववित्-तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। स कारणं करणाधिपाधिपः। आत्मनि खल्वरे विज्ञाते(१) सर्वमिदं विज्ञातं भवति। तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः(२)। पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं। तस्माद्विराडजायत। आत्मा वा इदमेक एवाग्र आसीत्—स इमाँल्लोकानसृजत। तस्माद्वा एतस्मादात्मन आकाशः संभूतः। एको ह वै नारायण आसीत्। स एकाकी नारमेत" इति सर्वज्ञः पुरुषोत्तम एव कारणतया प्रतिपाद्यते। अस्याश्च तद्गतिसामान्यादत्रापि स एव कारणतया प्रतिपादनमर्हतीति। न च प्रधानम् ॥

## श्रुतत्वाच्च ॥ १२ ॥

श्रुतमेवा(३)स्यामुपनिषदि "आत्मत एवेदं सर्वम्" इति। अतश्च "सदेव सोम्येदम्" इत्यादिजगत्कारणवादिवेदान्तवेद्यं न प्रधानम्। सर्वज्ञं सत्यसंकल्पं परमेव ब्रह्मेति (४) स्थितम् ॥

( आनन्दमयाधिकरणम्। )

## आनन्दमयोऽभ्यासात् ॥ १३ ॥

तैत्तिरीयके "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति प्रकृत्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर

---

(१) 'विदिते' ग०

(२) 'एतदृग्वेद-' ग०। क० पुस्तके 'एतद्यदृग्वेदः' इत्यंशो नास्ति।

(३) 'एव ह्यस्या' क० (४) 'परं ब्रह्मेति' ग०

आत्माऽऽनन्दमयः " इत्यत्र जगत्कारणतयाऽवगत आनन्दमयः किं प्रत्यगात्मोत परमात्मेति संशयः ॥ प्रत्यगात्मेति पूर्वपक्षः । कुतः । " तस्यैष एव शारीर आत्मा " इत्यानन्दमयस्य शारीरत्वश्रवणात् । शारीरो हि शरीरसंबन्धी । स च प्रत्यगात्मैव । तस्य चेतनत्वेनेक्षापूर्विका च सृष्टिरुपपद्यते ॥ राद्धान्तस्तु–" सैषाऽऽनन्दस्य मीमांसा भवति " इत्यारभ्य " यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् " इति निरतिशय(१)दशाशिरस्कोऽभ्यस्यमान आनन्दः प्रत्यगात्मनोऽर्थान्तरभूतस्य परस्यैव ब्रह्मण इति निश्चीयते। शारीरात्मत्वं च परमात्मन एव । " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्याकाशादिजगत्कारणतयाऽवगत एवान्नमयस्य शारीर आत्मेति प्रतीयते । आत्मान्तरा(२)निर्देशात् । श्रुत्यन्तरेषु पृथिव्यक्षरादीनां (३) शरीरत्वं परमात्मन आत्मत्व च श्रूयते " यस्य पृथिवी शरीरम् " इत्यारभ्य " एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः " इति । अन्नमयस्यात्मैव प्राणमयादिषु " तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यनुकृष्यते। इति प्रत्यगात्मनो विज्ञानमयस्य स एव शारीर आत्मा । आनन्दमये तु " तस्यैष एव शारीर आत्मा यः पूर्वस्य " इति निर्देशः आनन्दमयस्यानन्यात्मत्वप्रदर्शनार्थः । अतो जगत्कारणतया निर्दिष्ट आनन्दमयः परमात्मैवेति ॥ सूत्रार्थस्तु—आनन्दमयशब्दनिर्दि आकाशादिजगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरभूतः परमा

---

(१) ' निरतिशयानन्द ' ग०

(२) ' मयादिशारीर आत्मेति प्रतीतेरात्मान्तरा ' पा०

(३) ' पृथिव्यादीनां ' क०

त्मा । कुतः । अस्यानन्दस्य निरतिशयत्वप्रतीतिबलात् । " स एको मानुष आनन्दः—ते ये शतम् " इत्याद्यभ्यासात् तस्य च प्रत्यगात्मन्यसंभावितस्य तदतिरिक्ते परमात्मन्येव संभवात् ॥

विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ १४ ॥

" आनन्दमयः " इति विकारार्थान्मयट् (१) छब्दान्नायम विकृतः परमात्मा । अस्य च विकारार्थत्वमेव युक्तम् । " अन्नमयः" इति विकारोपक्रमादिति चेन्न । प्रत्यगात्मन्यपि " न जायते म्रियते वा विपश्चित् (२) " इति विकारप्रतिषेधात् । प्राचुर्यार्थ एवायं मयडिति निश्चयात् । अस्मिंश्चानन्दे " यतो वाचो निवर्तन्ते " इति (३) वक्ष्यमाणप्राचुर्य्या (४) दयमानन्दप्रचुरः परमात्मैव । नह्यनवधिकातिशयरूपः (५) प्रभूतानन्दः प्रत्यगात्मनि संभवति ॥

तद्धेतुव्यपदेशाच्च ॥ १५ ॥

" एष ह्येवानन्दयाति " इति जीवात्म(६)स्यानन्दयितृत्वव्यपदेशाच्चायं परमात्मैव ॥

मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

" सत्यं ज्ञानमनन्तं ब्रह्म " इति मन्त्रवर्णोदितं ब्रह्मैव " तस्माद्वा एतस्मादात्मनः " इत्यारभ्यानन्दमय इति गीयते । ततश्चानन्दमयो ब्रह्म ॥

---

(१) ' विकारार्थमयट् ' ग०

(२) ' विपश्चित् ' इत्यंशो नास्ति मुद्रिते । ' वा विपश्चित् ' इत्यंशो नास्ति क० पुस्तके ।

(३) ' इत्यादि ' मु० (४) ' वक्ष्यमाणात्प्राचुर्या ' मु०

(५) ' नह्यनवधिकातिशयानन्दरूपः ' ग०

(६) ' जीवात्मानं प्र ' ग०

प्रत्यगात्मनः परिशुद्धं स्वरूपं मन्त्रवर्णोदितमित्याशङ्क्याह–

नेतरोऽनुपपत्तेः ॥ १७ ॥

परस्माद्ब्रह्मण इतरः प्रत्यगात्मा न मन्त्रवर्णोदितः । तस्य "विपश्चिता ब्रह्मणा" इति विपश्चित्त्वानुपपत्तेः । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । तच्च "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिवाक्योदितनिरुपाधिकबहुभवनसंकल्पपूर्वकं (१) सर्वज्ञत्वम् । तत्तु प्रत्यगात्मनः परिशुद्धस्यापि (२) न संभवति । "जगद्व्यापारवर्जं प्रकरणात्" (३) इति वक्ष्यमाणत्वात् । अतः (४) परं ब्रह्मैव मान्त्रवर्णिकम् ॥

भेदव्यपदेशाच्च ॥ १८ ॥

"भीषाऽस्माद्वातः पवते" इत्यादिनाऽग्निवायुसूर्यादिजीवत्वर्गस्यानन्दमयात्प्रशासितुः प्रशासितव्यत्वेन भेदो व्यपदिश्यते । अतश्चानन्दमयः परमात्मेति ॥ योजनान्तरं "तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः" इति विज्ञानमयाज्जीवादानन्दमयस्य भेदो व्यपदिश्यते । विज्ञानमयो जीव एव । न बुद्धिमात्रम् । मयट्छ्रुतेः (५) । अतश्चानन्दमयः परमात्मेति ॥

कामाच्च नानुमानापेक्षा ॥ १९ ॥

"सोऽकामयत" इत्यारभ्य "इदं सर्वमसृजत" इति कामादेव जगत्सर्गश्रवणादस्यानन्दमयस्य जगत्सर्गे नानुमानगम्यप्रकृत्यपेक्षा (६) प्रतीयते । प्रत्यगात्मनो हि यस्य कस्य चिदपि

(१) 'सकलपरूपं' मु० (२) 'परिशुद्धस्वरूपस्यापि' मु०
(३) 'मुद्रिते सूत्र पूर्णमास्ति ।' (४) 'तत.' क०
(५) 'मात्र व्यपदिश्यते' ग० (६) 'अपेक्षाऽपि' मु०

सर्गे मकृत्यपेक्षाऽस्ति । अतश्चायं प्रत्यगात्मनोऽन्यः परमात्मा ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

" रसो वै सः,रसं ह्येवायं लब्ध्वानऽऽन्दी भवति " इत्यस्मिन्नानन्दमये रसशब्दनिर्दिष्टेऽस्यार्थशब्दनिर्दिष्टस्य (१) जीवस्य तल्लाभादानन्दयोगं शास्ति शास्त्रम् । प्रत्यगात्मनो यल्लाभादानन्दयोगः स तस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्म ॥

( अन्तराधिकरणम् । )

अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

छान्दोग्ये " य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । य एषोऽन्तराक्षिणि पुरुषो दृश्यते " इत्यक्ष्यादित्याधारतया श्रूयमाणः पुरुषः किं जीवविशेष उत परमपुरुष इति संशयः ॥ जीवविशेष इति पूर्वः पक्षः । कुतः । सशरीरत्वात् । शरीरसंयोगो हि कर्मवश्यस्य जीवस्य (२) स्वकर्मफलभोगायेति (३) ॥ राद्धान्तस्तु–"स एष सर्वेभ्यः पाप्मभ्य उदितः " इत्यादिनाऽपहतपाप्मत्व (४) पूर्वकसर्वलोककामेशत्वो (५)–पदेशात्तेषां जीवेष्वसंभवादयमक्ष्यादित्याधारः पुरुषोत्तम एव । स्वासाधारणविलक्षणरूपवत्त्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवत्तस्य संभवति । श्रूयते च तद्रूपस्याप्राकृतत्वम् " आदित्यवर्णं तमसस्तु पारे " इत्यादौ ॥ सूत्रार्थस्तुआदित्याद्यन्तः (६) श्रूयमाणः पुरुषः परं ब्रह्म ।

---

(१) ' अर्थशब्दनिर्दिष्टस्य ' इति नास्ति क० पुस्तके ।
(२) ' जीवस्य ' इति क० पुस्तके नास्ति ।
(३) ' फलोपभोगायेति ' ग० (४) ' पाप्मत्वादि ' ग०
(५) ' कामेशशब्दो ' ग०
(६) ' आदित्याद्यन्तः' मु० ' आदित्यादौ ' ग०

तद (१) साधारणापहतपाप्मत्वादि (२) धर्मोपदेशात् ॥

भेदव्यपदेशाच्चान्यः ॥ २२ ॥

" य आदित्ये तिष्ठन्नादित्यादन्तरः । य आत्मनि तिष्ठन्नात्मनो ऽन्तरः " इत्यादिभिर्जीवा(३) द्भेदव्यपदेशाच्चायं जीवादन्यः परमात्मैव ॥

( आकाशाधिकरणम् । )

आकाशस्तल्लिङ्गात् ॥ २३ ॥

छन्दोग्ये (४) " अस्य लोकस्य का गतिरित्याकाश (५) इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति " इत्यत्राकाशशब्दनिर्दिष्टं जगत्कारणं किं प्रसिद्धाकाश उत समस्तचिदचिद्वस्तुवि (६) लक्षणं ब्रह्मेति संशयः ॥ प्रसिद्धाकाश इति पूर्वः पक्षः । कुतः । आकाशशब्दस्य लोके तत्रैव व्युत्पत्तेः । " यतो वा इमानि भूतानि " इत्यादिसामान्यलक्षणस्य सदादिशब्दानामपि साधारणत्वेन "आकाशादेव समुत्पद्यन्ते " इति विशेषे पर्यवसानात् । ईक्षणादयोऽप्याकाश एव जगत्कारणमिति निश्चिते सति गौणा वर्णनीयाः ॥ राद्धान्तस्तु–" सर्वाणि ह वा इमानि भूतानि " इति प्रसिद्धवन्निर्देशात्प्रसिद्धेक्षापूर्वकत्वाद्वि-

(१) ' तस्या ' ग०

(२) ' तदसाधारणसर्वेश्वरत्वपाप्मोदयादि ' क० ' तदसाधारणसर्वेश्वरत्वापास्तोदयादि ' पा०

(३) ' इत्यादिजी ' ग०

(४) ' छान्दोग्ये ' इति ग० पुस्तके नास्ति ।

(५) ' गति " इत्युक्ते प्रतिवचनम् " आकाश ' ग०

(६) ' चिदचिद्वि ' क०

दचिद्वस्तुवि (१)लक्षणं सर्वज्ञं ब्रह्माकाशशब्दनिर्दिष्टमिति ॥ सूत्रार्थस्तु–आकाशशब्दनिर्दिष्टं परमेव ब्रह्म । प्रसिद्धवन्निर्दिश्यमानाज्जगत्कारणत्वादिलिङ्गात् ॥

( प्राणाधिकरणम् । )

अत एव प्राणः ॥ २४ ॥

छान्दोग्ये "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य "कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इत्यत्र निखिलजगत्कारणतया प्राणशब्दनिर्दिष्टः किं प्रसिद्धः प्राण उतोक्तलक्षणं ब्रह्मेति संशयः ॥ प्रसिद्धप्राण इति पूर्वः पक्षः । कुतः । सर्वस्य जगतः प्राणायत्तस्थितिदर्शनात्स एव निखिलजगदेककारणतया निर्देशमर्हतीति ॥ राद्धान्तस्तु–शिलाकाष्ठादिष्वचेतनेषु चेतनस्वरूपेषु च(२) प्राणायत्तस्थित्यभावात् "सर्वाणि ह वा इमानि भूतानि" इति प्रसिद्धवन्निर्देशादेव हेतोः प्राणशब्दनिर्दिष्टं परमेव ब्रह्म ॥ सूत्रमपि व्याख्यातम् ॥

( ज्योतिरधिकरणम् । )

ज्योतिश्चरणाभिधानात् ॥ २५ ॥

छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इत्यत्र जगत्कारणत्वव्याप्तनिरतिशयदीप्तियुक्ततया ज्योतिःशब्दनिर्दिष्टं किं प्रसिद्धादि-

(१) 'चिदचिद्वि' ग०
(२) 'चेतनस्वरूपेषु च' इति मुद्रित एवास्ति ।

त्यादिज्योतिरुत परमेव ब्रह्मेति संशयः ॥ प्रसिद्धज्योतिरिति पूर्वः पक्षः । कुतः । "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति कौक्षेयज्योतिषा प्रसिद्धेनैक्यावगमात् । स्ववाक्ये तदतिरिक्तपरब्रह्मासाधारणलिङ्गा(१)दर्शनाच्च ॥ राद्धान्तस्तु-प्रसिद्धज्योतिषोऽन्यदेव पर ब्रह्मेह निरतिशयदीप्तियुक्त ज्योतिःशब्दनिर्दिष्टम् । कुतः । "पादोऽस्य विश्वा (२) भूतानि त्रिपादस्यामृत दिवि" इति पूर्ववाक्ये द्युसंबन्धितया निर्दिष्टस्यैव चतुष्पदो ब्रह्मणः "अथ यदतः परो दिवो ज्योतिः" इत्यत्र प्रत्यभिज्ञानात् । तच्च परमेव ब्रह्मेति विज्ञातम् । सर्वेषां भूतानां तस्य पादत्वेन व्यपदेशात् । एवं परब्रह्मत्वे निश्चिते कौक्षेयज्योतिषस्तु तदात्मकत्वानुसधानं फलायोपदिश्यत इति ज्ञायते (३) ॥ सूत्रार्थस्तु-ज्योतिःशब्दनिर्दिष्ट पर ब्रह्म । अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानात् । सर्वभूतपादत्व च परस्यैव ब्रह्मण उपपद्यते ॥

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथाहि दर्शनम् ॥ २६ ॥

"गायत्री वा इद सर्वम्" इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात्सर्वभूतपादत्वेन गायत्र्या एवाभिधानान्न ब्रह्मेति चेत्, नैतत् । तथा चेतोऽर्पणनिगमात् गायत्री यथा भवति तथा ब्रह्मणि चेतोऽर्पणोपदेशात् । गायत्री सादृश्य चतुष्पात्त्व ब्रह्मण्यनुसंधेयमित्युपदिश्यते । गायत्र्याः सर्वात्मत्वानुपपत्तेरित्यर्थः । तथा हि दर्शनं तथा ह्यन्यत्रापि छन्दस एव सादृश्या-

(१) 'लिङ्गप्रतिपादका' इत्यपि पाठ ।
(२) 'सर्वा' मु०
(३) 'विज्ञायते' क०

च्छन्दः शब्देनाभिधानं दृश्यते "ते वा एते पञ्चान्ये पञ्चान्ये दश संपद्यन्ते" इत्यारभ्य "सैषा विराडन्नादी" इति ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य "सैषा चतुष्पदा" इति भूतादीनां पादत्वव्यपदेशो ब्रह्मण्येवोपपद्यत इति च ब्रह्मैव गायत्रीशब्दनिर्दिष्टमिति गम्यते ॥

उप(१)देशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति पूर्ववाक्योदितं परं ब्रह्मैवास्तु; तथापि "अथ यदतः परो दिवो ज्योतिः" इति द्युसंबन्धमात्रेण नेह तत्प्रत्यभिज्ञायते; तत्र चात्र चोप(२)देशप्रकारभेदात्; तत्र हि "दिवि" इति द्यौः सप्तम्या निर्दिश्यते, इह च "दिवः परो ज्योतिः" इति पञ्चम्या, ततो न प्रतिसंधानमिति चेन्न। उभयस्मिन्नपि व्यपदेश उपरिस्थितिरूपार्थैक्येन प्रतिसंधानाविरोधात्। यथा वृक्षाग्रे श्येनः, वृक्षाग्रात्प(३)रतः श्येन इति ॥

( इन्द्रप्राणाधिकरणम्। )

प्राणस्तथाऽनुगमात् ॥ २९ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायाम् "त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्त इन्द्रः "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्याह। अत्र हिततमोपासनकर्मतया निर्दिष्ट इन्द्रः प्राण(४)शब्दाभिधे-

---

(१) 'व्यप' ग० (२) 'च व्यप' ग०
(३) 'वृक्षात्प' क० (४) 'इन्द्रप्राण' क० मु०

यः किं जीव उत परमात्मेति संशयः ॥ जीव इति पूर्वपक्षः । इन्द्रशब्दस्य जीवविशेषे प्रसिद्धेः (१) प्राणशब्दस्यापि तत्समानाधिकरणस्य स एवार्थ इति "तं मामायुरमृतमित्युपास्व" इति तस्यैवोपास्यत्वोपदेशात् ॥ राद्धान्तस्तु–इन्द्रप्राणशब्दनिर्दिष्टं जीवादर्थान्तरभूतं परं ब्रह्म "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इतीन्द्रप्राणशब्दनिर्दिष्टस्यैव जीवेष्वसंभावितानन्दत्वाजरत्वामृतत्वश्रवणात् ॥ सूत्रार्थस्तु–उपास्यतयोपदिष्टमिन्द्रप्राणशब्दाभिधेयं परं ब्रह्म। तथेति प्रकारवचनः। परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्यानुगमात् ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्ध-

भूमा ह्यस्मिन् ॥ ३० ॥

नायमुपास्यः परमात्मा, "मामेव विजानीहि। तं मामायुरमृतमित्युपास्व" इति प्रज्ञातजीवभावस्येन्द्रस्य वक्तुः स्वात्मन उपास्यत्वो(२)पदेशात्, उपक्रमे जीवभावनिश्चये सत्युपसंहारस्य तदनुगुणतया नेयत्वादिति चेन्न। अध्यात्मसंबन्धभूमा ह्यस्मिन् आत्मनि संबन्धोऽध्यात्मसंबन्धस्तस्य भूमा बहुत्वम्।जीवादर्थान्तरभूतात्माऽसाधारणधर्मसंबन्धबहुत्वमस्मिन्प्रकरण उपक्रमप्रभृत्युपसंहाराद्रुपलभ्यते । उपक्रमे तावत् (३) "यं त्वं मनुष्याय हितंतमं मन्यसे" इत्यने(४)नोच्यमानमुपासनं परमात्मोपासनमेव । तस्यैव हिततमत्वात्। तथा "एष एव(५)साधु कर्म कारयति" इत्यादि साध्वसाधुकर्मणोः कारयितृत्वं परमात्मन एव धर्मः । "तद्य-

(१) 'प्रसिद्धि.' क०
(२) 'उपास्यत्वेनो' क०
(३) 'तावदुक्तम्' ग०
(४) 'इति ह्यने' मु० 'इत्युक्ते' पा०
(५) 'एष ह्येव' क०

था रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वं च तस्यैव धर्मः। आनन्दादयश्च। "एष लोकाधिपतिरेषसर्वेशः" इति च। हीति हेतौ अतः परब्रह्मैवायमित्यर्थः॥

परमात्मैवोपास्यश्चेत्कथमिन्द्रो "मामुपास्व" इत्युपदिदेशेत्यत आह—

शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ ३१॥

इन्द्रस्य जीवस्यैव सतः स्वात्मत्वेनोपास्यभूतपरमात्मोपदेशोऽयं शास्त्रदृष्ट्या। "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा। तत्त्वमसि। य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि हि शास्त्राणि परमात्मानं (१) जीवात्मन आत्मतयोपदिदिशुः। अतो जीवात्मवाचिनः शब्दाः जीवात्मशरीरकं परमात्मानमेव वदन्तीति विदितशास्त्रार्थस्य(२) "मामेव विजानीहि। मामुपास्व" इति स्वात्मवाचि(३) शब्देनपरमात्मोपदेशोऽयं न विरुद्ध्यते। यथा वामदेवः शास्त्रदृष्ट्या स्वात्मशरीरकं परमात्मानं पश्यन्नहमिति परमात्मानमवोचत् "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः" इति॥

(१) 'परमात्मनो' ग०

(२) 'शास्त्रदृष्टार्थस्य तस्य' मु०। 'विदित' इति विना 'शास्त्रार्थस्य' इत्येव पाठान्तरे।

(३) 'वाचि' इति मुद्रित क० पुस्तकयोर्नास्ति।

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रि-
तत्वादिह तद्योगात् ॥ ३२ ॥

"त्रिशिर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रा-यच्छम्। यावदस्मिञ्छरीरे प्राणो वसति तावदायुः" इति जीव-मुख्यप्राणलि(१)ङ्गान्नाभ्यात्मसंबन्धभूम्ना परमात्मत्वनिश्चय इति चेन्न। परमात्मन एव स्वाकारेण जीवशरीरकत्वेन प्राण-शरीरकत्वेन चोपासात्रैवि ध्याद्धेतोस्तत्त(२)च्छब्देनाभिधानमिति निश्चीयते। अन्यत्रापि ब्रह्मोपासने त्रै(३)वि ध्यस्याश्रितत्वा-त् "सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्म" इति स्वाकारेणोपास्य-त्व "सच्च त्यच्चाभवत्" इत्यादिना भोक्तृशरीरकत्वेन भोग्यश-रीरकत्वेन च। इह प्रतर्दनविद्यायामपि तस्य त्रैवि ध्यस्य संभवात्। अत इन्द्रप्राणशब्दनिर्दिष्टः परमात्मा ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
प्रथमाध्यायस्य प्रथमः पादः ॥

---

(सर्वत्रप्रसिद्ध्यधिकरणम्।)

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

छान्दोग्ये श्रूयते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयोऽयं पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरः" इति। अत्र "सर्वं खल्विदं ब्रह्म" इति सर्वात्मत्वेन नि-र्दिष्टं ब्रह्म किं प्रत्यगात्मोत परमात्मेति संशयः॥प्रत्यगात्मेति पूर्वः पक्षः। सर्व(४)तादात्म्योपदेशो हि तस्यैवोपपद्यते। परस्य तु

---

(१) 'प्राणयार्लि' क०
(२) 'तत्र त' ग०
(३) 'पासनात्रै' म०
(४) 'सर्वं' म०

ब्रह्मणः सकलहेयप्रत्यनीककल्याणैकतानस्य समस्तहेयाकर (१)-सर्वतादात्म्यं विरोधादेव न संभवति । प्रत्यगात्मनो हि कर्मनिमित्त(२)ब्रह्मादिस्तम्बपर्यन्तसर्वभाव उपपद्यते । सृष्ट्यादिहेतुकत्वं च तत्तत्कर्म (३) निमित्तत्वेन सृष्ट्यादेरुपपद्यते। ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति तत्रैव वर्तते॥ राद्धान्तस्तु—" तज्जलान्" इति "सर्वं खल्विदं ब्रह्म" इति तज्जन्मस्थितिविलयहेतुकं तदात्मकत्वं प्रसिद्धवन्निर्दिश्यमानं परस्यैव ब्रह्मण उपपद्यते। परस्माद्ब्रह्मण एव हि जगज्जन्मस्थितिलयाः प्रसिद्धाः "सोऽकामयत बहुस्यां प्रजायेयेति । इदं सर्वमसृजत" इत्यादिषु तथा सर्वात्मकत्वं च जन्मादिहेतुकं परस्यैव ब्रह्मणः(४) प्रसिद्धं "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वम्" इति हेयप्रत्यनीककल्याणैकतानात्मनश्च परस्य हेयाकरसर्वभूतात्मत्वमविरुद्धम् । यः पृथिव्यां तिष्ठन्—यस्य पृथिवीशरीरम् । य आत्मनि तिष्ठन्—यस्यात्मा शरीरं स त आत्मान्तर्याम्यमृतः" इत्यादिना शरीरात्मभावेन सर्वात्मत्वोपपादनात्। शरीरात्मनोश्च स्वभावव्यवस्थापनात्। सर्वं ब्रह्मेति सर्वत्र सर्वशब्द(५) सामानाधिकरण्यनिर्देशश्च सर्वशब्दस्य सर्वशरीरके ब्रह्मण्येव प्रवृत्तेरुपपद्यते । शरीरवाची हि शब्दः शरीरिण्यात्मन्येव पर्यवस्यति । देवमनुष्यादिशब्दवत् ॥ सूत्रार्थः—सर्वत्र "सर्वं खल्विदं ब्रह्म" इति निर्दिष्टे सर्वत्र सर्वशब्द (६)-

(१) 'समस्तहेयाकार' ग० 'समस्तहेयाकारं' मु०
(२) 'निमित्तो' मु० (३) 'तस्यैव कर्म' पा०
(४) 'ब्रह्मणः' इति क० ग० पुस्तकयोर्न ।
(५) 'सर्वत्र सर्वशब्द' इति मुद्रित ग० पुस्तकयोर्नास्ति ।
(६) 'निर्दिष्टे वस्तुनि सर्वशब्दवाच्ये' मु० 'निर्दिष्टे सर्वत्र जगति सर्वशब्दसामा' पा० 'निर्दिष्टे वस्तुनि सर्वशब्दस्य' ग०

सामानाधिकरण्येन तदात्मतया निर्दिष्टं परं ब्रह्मैव । कुतः । प्रसिद्धोपदेशात् तज्जलानिति सर्वमिदं ब्रह्म खल्विति प्रसिद्धवत्सर्वात्मकत्वस्योपदेशात् (१) । तदेव हि जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तेषु प्रसिद्धम् ॥

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

मनोमयत्वादिकाः सत्यसंकल्पत्वमिश्रा विवक्षिताः गुणाः परस्मिन्नेवोपपद्यन्ते ॥

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

एतेषां गुणानामनन्तदुःखमिश्रपरिमितसुखलवभागिन्यज्ञे कर्मपरवशे शारीरे प्रत्यगात्मन्यनुपपत्तेश्चायं न शारीरः । अपि तु परमेव ब्रह्म ॥

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

"एतमितः प्रेत्याभिसंभवितास्मि" इति प्राप्यतयोपास्यो निर्दिश्यते, प्राप्तृतया च जीवः । अतश्च जीवादन्यदेवेद (२) परं ब्रह्म॥

शब्दविशेषात् ॥ ५ ॥

"एष म आत्माऽन्तर्हृदये" इति शारीरः षष्ठ्या निर्दिष्टः, उपास्यः प्रथमया । अतश्च जीवादन्यः ॥

स्मृतेश्च ॥ ६ ॥

"सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञान मपोहनं

(१) 'प्रसिद्धवत्सस्योपदेशात्' ग० 'प्रसिद्धवत्सस्योपदेशात् । सर्वात्मकत्वस्योपदेशाच्च' मु०
(२) 'इदम' इति ग० पुस्तके नास्ति ।

च" इति स्मृतेश्च जीवादन्य उपास्यः परमात्मा ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

"एष म आत्माऽन्तर्हृदये" इत्यल्पस्थानत्वात् "अणीयान्व्रीहेर्वा यवाद्वा" इत्यल्पत्वव्यपदेशाच्च न परं ब्रह्मेति चेन्न। निचाय्यत्वादेव एवमुपास्यत्वाद्धेतोरल्पायतनत्वाल्पत्वव्यपदेशः। न स्वरूपाल्पत्वेन। "ज्यायान्पृथिव्याः" इत्यादिना सर्वस्माज्ज्यायस्त्वोपदेशात्। ज्यायसोऽप्यस्य हृदयायतनावच्छेदे (१)-नाल्पत्वानुसंधानमुपपद्यते। व्योमवत् यथा महतोऽपि व्योम्नः सूचिपाश्या (२) दिष्वल्पत्वानुसंधानम्। चशब्दोऽवधारणे तद्वदेवेत्यर्थः (३)। स्वाभाविकं चास्य महत्त्वमत्र व्यपदिश्यत इत्यर्थः। "ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति ह्यनन्तरमेव व्यपदिश्यते (४) ॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

यद्युपासकशरीरे (५) हृदयेऽयमपि वर्तते ततस्तद्वदेवास्यापि शरीरप्रयुक्तसुखदुःखसंभोगप्राप्तिरिति चेन्न। हेतुवैशेष्यात्। न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः। अपि तु कर्मपरवशत्वम्। तत्त्वपहतपाप्मनः परमात्मनो न संभवति ॥

---

(१) 'वच्छेदत्वे' ग०
(२) 'सूचीपथा' मु० 'सूचिपाशा' क०
(३) 'वेत्यर्थ। व्योमवच्चाय व्यपदिश्यते। ज्यामा' पा०
(४) 'इतियुक्त परमे व्यपदिश्यते' पा०
(५) 'शरीरि' क०

( अत्त्रधिकरणम् । )

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीष्वाम्नायते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति। अत्रौदनोपसेचनसूचितोऽत्ता किं जीव उत परमात्मेति संशयः ॥ जीव इति पूर्वः पक्षः । भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्संभवात् ॥ राद्धान्तस्तु—सर्वोपसंहारे मृत्यूपसेचनमदनीयं चराचरात्मकं कृत्स्नं जगदिति तस्यैव (१) स्यात्तापरमात्मैव न चेदं कर्मनिमित्तं भोक्तृत्वम् । अपितु जगत्सृष्टि(२)स्थितिलयलीलस्य परमात्मनो जगदुपसंहारित्वरूपं भोक्तृत्वम् ॥ सूत्रार्थः- ब्रह्मक्षत्रौदनस्यात्ता परमात्मा। ब्रह्मक्षत्रशब्देन चराचरस्य (३) कृत्स्नस्य जगतो ग्रहणात् । मृत्यूपसेचनो ह्योदनो न(४) ब्रह्मक्षत्रमात्रम् । अपि तु तदुपलक्षितं चराचरात्मकं कृत्स्नं जगदेव ॥

## प्रकरणाच्च ॥ १० ॥

" महान्तं विभुमात्मानं मत्वा धीरो न शोचति, नायमात्मा प्रवचनेन लभ्यो न मेधया (५) " इति परस्यैव ह्येदं प्रकरणम् । अतश्चायं परमात्मा ॥

अनन्तरं (६)" ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ

---

(१) 'तस्यौदन ' ग० (२) ' अपि जगतः सृष्टि ' क०

(३) ' चराचरात्मकस्य ' ग०

(४) ' न मृत्यूपसेचनस्यौदनं ' ग०

(५) ' नमेधया ' इत्यंशः क० ग० पुस्तकयोर्नास्ति ।

( ६ ) ' नन्वनन्तरम् ' मु०

परमे परार्द्धे" इति द्वयोः (१) कर्मफलाशनश्रवणात्परमात्मनश्च कर्मफलादनानन्वया(२)दन्तःकरणद्वितीयो जीव एव तत्रात्तेति (३) प्रतीयते, अतोऽत्रापि स एव जीवोऽत्ता भवितुमर्हतीत्याशङ्क्याह—

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

गुहां प्रविष्टौ हि जीवात्मपरमात्मानौ। जीवद्वितीयः परमात्मैव तत्र प्रतीयत इत्यर्थः। स्वयमनश्नतोऽपि परमात्मनः प्रयोजकतया पानेऽन्वयो विद्यते (४)। जीवद्वितीयः परमात्मेति कथमवगम्यते। तद्दर्शनात्। तयोरेव ह्यस्मिन्प्रकरणे गुहाप्रवेशव्यपदेशो दृश्यते "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्, अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति परमात्मनः "या प्राणेन संभवत्यदितिर्देवतामयी, गुहां प्रविश्य तिष्ठन्ती सा भूतेभिर्व्यजायत" इति जीवस्य। कर्मफलान्यत्तीत्यदितिर्जीवः ॥

विशेषणाच्च ॥ १२ ॥

अस्मिन्प्रकरणे ह्युपक्रमप्रभृत्योपसंहारा (५) ज्जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वादिभिर्विशिष्येते "महान्तं विभुमात्मानं मत्वा धीरो न शोचति। (६) विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यादिषु। अतश्चात्ता परमात्मा ॥

---

(१) 'द्वयोरपि' क०
(२) 'कर्मफलानन्वया' क० 'कर्मफलादनासंभवा' ग०
(३) 'अत्रात्मेति' ग० (४) 'दृश्यते' ग०
(५) 'प्रभृत्युपसंहारा' मु० ग०
(६) 'शोचति" इति "विज्ञान' क०

( अन्तराधिकरणम् । )

## अन्तर उपपत्तेः ॥ १३ ॥

छान्दोग्ये " य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म " इत्यत्राक्ष्याधारः पुरुषः किं प्रतिबिम्बात्मजीवदेवताविशेषेष्वन्य(१)तम उत परमात्मेति संशयः ॥ एष्वन्यतम इति पूर्वपक्षः । " य एष–दृश्यते " इति प्रसिद्धवत्साक्षात्कारनिर्देशात् ॥ राद्धान्तस्तु–परमात्मैवायमक्ष्याधारः पुरुषः अक्षिपुरुषसंबन्धितया श्रूयमाणा निरुपाधिकात्म(२)त्वामृतत्वाभयत्वब्रह्मत्वसंयद्वा(३)मत्वादयः परमात्मन्येवोपपद्यन्ते । प्रसिद्धवन्निर्देशश्च "यश्चक्षुषि तिष्ठन्" इत्यादि श्रुत्यन्तरप्रसिद्धेरुपपद्यते । साक्षात्कारश्च तदुपासननिष्ठानां योगिनामिति ॥ सूत्रार्थः–अक्ष्यन्तरपुरुषः परमात्मा । संयद्वा(४)मत्वादीनां गुणानामत्रै(५)वोपपत्तेः ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

स्थानं स्थितिः । परमात्मन एव " यश्चक्षुषि तिष्ठन् " इत्यादौ चक्षुषि स्थिति(६)नियमनादीनां व्यपदेशाच्चायं परमात्मा ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

" प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म "इति सुखविशिष्टतया प्रकृतस्यैव परस्य (७) ब्रह्मणोऽक्ष्याधारतयोपास्यत्वाभिधाना-

---

(१) ' प्रत्यगात्मा जीवो । देवताविशेषेष्वन्य ' ग० ' प्रतिबिम्बात्मजीवदेवताविशेषान्य ' मु०
(२) ' निरुपाधिका आत्म ' ग०
(३) ' बृहत्त्वसंयद्वा ' ग०
(४) ' संयद्वा ' ग०
(५) ' गुणानां तत्रै ' क०
(६) ' चक्षु स्थिति ' क०
(७) 'प्रकृतस्य परस्यैव' मु०

त्वार्यं परमात्मा। एवकारोऽस्यैव हेतोर्नैरपेक्ष्यावगमाय॥

"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्यत्र सुखविशिष्टं परमेव ब्रह्माभिहितमिति कथमिद(१)मवगम्यते यावता नामादिवत्प्रतीकोपासनमेवेत्याशङ्क्याह—

अत एव च स ब्रह्म॥ १६॥

यतस्तत्र भवभयभीतायोपकोसलायं ब्रह्मस्वरूपजि(२)ज्ञासवे "कं च तु खं च (३) न विजानामि" इति पृच्छते "यद्वाव कं तदेव खं यदेव खं तदेव कम्" इत्यन्योन्यव्यवच्छेदकतयाऽपरिच्छिन्नसुखस्वरूपं ब्रह्मेत्यभिधाय "प्राणं च हास्मै तदाकाशं चोचुः" इत्युक्तम्। अत एव खशब्दा(४)भिधेयः स आकाशोऽपरिच्छिन्नसुखविशिष्टं परं ब्रह्मैव॥

श्रुतोपनिषत्कगत्यभिधानाच्च॥ १७॥

श्रुतोपनिषत्कैरधिगतब्रह्म(५)याथात्म्यैर्ब्रह्मप्राप्तये या गतिरर्चिरादिकाऽधिगन्तव्यतयाऽवगता श्रुत्यन्तरे तस्याश्चेहाक्षिपुरुषं श्रुतवतो(६)ऽधिगन्तव्यतया "तेऽर्चिषमेवा(७)ऽभिसंभवन्ति" इत्यादिनाऽभिधानादक्षिपुरुषः परमात्मा॥

अनवस्थितेरसंभवाच्च नेतरः॥ १८॥

परमात्मन इतरो जीवादिकः। तस्याक्षिणि नियमेना-

---

(१) 'इदम्' इति ग० पुस्तके नास्ति।
(२) 'स्वरूपं जि' ग०
(३) 'कं च खं च तु' ग०
(४) 'सुखशब्दा' ग०
(५) 'परब्रह्म' मु०
(६) 'श्रुतवते' क०
(७) 'तेऽर्चिषम' क०

नवस्थितेरमृतत्वसंपद्वामत्वादीनां चासम्भवान्न सो(१)ऽक्ष्याधारः ॥

( अन्तर्याम्यधिकरणम् । )

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

बृहदारण्यके "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इत्यादिषु सर्वेषु पर्यायेषु श्रूयमाणोऽन्तर्यामी किं प्रत्यगात्मोत परमात्मेति संशयः ॥ प्रत्यगात्मेति पूर्वः पक्षः । वाक्यशेषे "द्रष्टा-श्रोता-मन्ता" इति द्रष्टृत्वादिश्रुतेः । "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्टन्तरनिषेधाच्च । राद्धान्तस्तु-पृथिव्याद्यात्मपर्यन्तसर्वतत्त्वानां सर्वैरेभिरदृष्टेनैकेन नियमनं निरुपाधिकामृतत्वादिकं च परमात्मन एव धर्म इत्यन्तर्यामी परमात्मा । द्रष्टृत्वादिश्च रूपादिसाक्षात्कारः । स च "पश्यत्यचक्षुः स शृणोत्य कर्णः" इत्यादिना च परमात्मनोऽप्यस्ति । "नान्योऽतोऽस्ति द्रष्टा" इति जीवेनादृष्टान्तर्यामिद्रष्टृवत् अन्तर्यामिणाऽप्यदृष्टद्रष्ट्रन्तरनिषेधपरः ॥ सूत्रार्थः--अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मा । सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियमनसर्वात्मत्वामृतत्वादिपरमात्मधर्माणां व्यपदेशात् ॥

न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

स्मार्त्तं प्रधानम् । शारीरः प्रत्यगात्मा । स्मार्त्तं च

(१) 'नासाव' ग०

शारीरश्च नान्तर्यामी। तयोरसंभावितात्म(१)धर्माभिलापात्। यथा स्मार्त्तस्याचेतनस्यासंभावनया नान्तर्यामित्वप्रसक्तिस्तथा प्रत्यगात्मनोऽपीत्यर्थः॥

उभयेऽपि हि भेदेनैनमधीयते॥ २१॥

उभये काण्वा माध्यन्दिनाश्चापि "यो विज्ञाने तिष्ठन्। य आत्मनि तिष्ठन्" इति यतः प्रत्यगात्मनो भेदेनैनमन्तर्यामिणमधीयते अतोऽयं तदतिरिक्तः परमात्मा॥

(अदृश्यत्वाधिकरणम्।)

अदृश्यत्वादिगुणको धर्मोक्तेः॥ २२॥

आथर्वणे "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्" इत्यारभ्य "यद्भूतयोनिं परिपश्यन्ति धीराः। अक्षरात्परतः परः" इत्यादौ किं प्रधानपुरुषौ प्रतिपाद्येते उत परमात्मेति संशयः॥ प्रधानपुरुषाविति पूर्वपक्षः। पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात्तज्जातीयमचेतनं प्रधानमेव भूतयोन्यक्षरमिति प्रतीयते। तथा "अक्षरात्परतः परः" इति च त(२)स्याधिष्ठाता पुरुष एवेति॥ राद्धान्तस्तु—उत्तरत्र "यः सर्वज्ञः सर्ववित्"इति प्रधानपुरुषयोरसंभावितं सार्वज्ञ्यमभिधाय "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति सर्वज्ञात्सत्यसंकल्पाज्जगदुत्पत्तिश्रवणात्पूर्वोक्तमदृश्यत्वादिगुणकं भूतयोन्यक्षरम्। "अक्षरात्परतः परः" इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति विज्ञायते॥ सूत्रार्थः—अदृश्यत्वादिगुणकः परमात्मा। सार्वज्ञ्या(३)दितद्धर्मोक्तेः॥

(१) 'संभवितोक्त' मु० (२) 'इति चैत' मु०
(३) 'सर्वज्ञत्वादि' मु०

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

विशिनष्टि हि प्रकरणं प्रधानाद्भूतयोन्यक्षरमेकविज्ञानेन सर्वविज्ञानादिना । तथा "अक्षरात्परतः परः" इत्यक्षराद्व्याकृतात्परतोऽवस्थितात्पुरुषात्पर इति पुरुषाच्चास्य भूतयोन्यक्षरस्य भेदो व्यपदिश्यते । अतश्च न प्रधानपुरुषौ । अपि तु परमात्मैवात्र निर्दिष्टः ॥

रूपोपन्यासाच्च ॥ २४ ॥

"अग्निर्मूर्द्धा" इत्यादिना समस्तस्य चिदचिदात्मकप्रपञ्चस्य भूतयोन्यक्षररूपत्वेनोपन्यासाच्चायमदृश्यत्वादिगुणकः परमात्मा ॥

( वैश्वानराधिकरणम् । )

वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

छान्दोग्ये "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि" इत्यारभ्य "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इत्यत्र किमयं वैश्वानर आत्मा पर(१)मात्मेति शक्यनिर्णय उत नेति संशयः ॥ अशक्यनिर्णय इति पूर्वः पक्षः । वैश्वानरशब्दस्य जाठराग्नौ महाभूततृतीये देवताविशेषे परमात्मनि च वैदिकप्रयोगदर्शनात् । अस्मिन्प्रकरणे सर्वेषां लिङ्गोपलब्धेश्च ॥ राद्धान्तस्तु-"को न आत्मा किं ब्रह्म" इति सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रक्रमादुत्तरत्र च "आत्मानं वैश्वानरम्" इति ब्रह्म शब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्च वैश्वानर आत्मा

---

(१) 'वैश्वानरात्मा पर' क० 'वैश्वानरः पर' मु०

सर्वेषां जीवानामात्मभूतं परं ब्रह्मेति विज्ञायते ॥ सूत्रार्थः-वैश्वानरशब्दनिर्दिष्टः परमात्मा । वैश्वानरशब्दस्यानेकार्थसाधारणत्वेऽप्यस्मिन्प्रकरणे परब्रह्मासाधारणैर्विशेषणैः सर्वात्मत्वादिभिर्विशेष्यमाणत्वात् । विशेष्यत इति विशेषः ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

स्मर्यमाणं प्रत्यभिज्ञायमानम् । अनुमीयतेऽनेनेत्यनुमानम् । इतिशब्दः प्रकारवचनः । इत्थंरूपं स्मर्यमाणं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । द्युप्रभृतिपृथिव्यन्तम(१)वयवविभागेन वैश्वानरस्य रूपमिहोपदिष्टम् "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ । द्यां मूर्द्धानमस्य विप्रा वदन्ति" इति च श्रुतिस्मृति(२)प्रसिद्धं परमपुरुषरूपमिह प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे(३) लिङ्गं स्यादित्यर्थः ॥

अनिर्णयमाशङ्क्य परिहरति-

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥२७॥

शब्दादिभ्यः(४)-शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे "स एषोऽग्निर्वैश्वानरः" इति वैश्वानर(५)-

---

(१) 'पृथिव्यन्तरम' ग० 'पृथिवीपर्यन्तम' क०
(२) 'इत्यदिश्रुतिप्रसिद्धं' क० 'इति श्रुतिस्मृतिप्रसिद्धम्' मु०
(३) 'परमात्मत्वे' मु०
(४) 'शब्दादिभ्योऽन्तः प्रतिष्ठानाच्चेति' मु०
(५) 'वैश्वानरशब्द' ग०

समानाधिकरणोऽग्निशब्दः, अस्मिन्प्रकरणे च " हृदयं गार्हपत्यः " इत्यारभ्य वैश्वानरस्य हृदयादिस्थानस्या(१)-ग्नित्रयपरिकल्पनं प्राणाहुत्याधारत्वमित्यादिप्रतीयते, वाजिनामपि " स यो ह वै तमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद " इति वैश्वानरस्य पुरुषशरीरान्तःप्रतिष्ठितत्वं प्रतीयते, अत एतैर्लिङ्गैर्वैश्वानरस्य जाठराग्नित्वप्रतीतेर्नायं परमात्मेति शक्यानिर्णय इति चेत् तन्न(२) । तथा दृष्ट्युपदेशात् । दृष्टिरुपासनम् । तथोपासनोपदेशादित्यर्थः । जाठराग्निशरीरतया वैश्वानरस्य परमात्मन उपासनं ह्यत्रोपदिश्यते " अयमग्निर्वैश्वानरः पुरुषेऽन्तः प्रतिष्ठितः " इत्यादौ । कथमवगम्यत इति चेदसंभवात् । केवलजाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसंभवात् । पुरुषमपि चैनमधीयते । च शब्दः प्रसिद्धौ । वाजिनस्तत्रैव " स एषोऽग्निर्वैश्वानरो यत्पुरुषः " इत्येनं (३) वैश्वानरं पुरुषमपि ह्यधीयते । पुरुषश्च परमात्मैव । " पुरुष एवेदं सर्वम् । पुरुषान्न परं किं चित् " इत्यादिषु प्रसिद्धेः ॥

अत एव न देवता भूतं च ॥ २८ ॥

यतस्त्रैलोक्यशरीरोऽसौ वैश्वानरो यतश्च निरुपाधिकपुरुषशब्दनिर्दिष्टोऽत एव नाम्न्याख्या देवता महाभूततृतीयश्च वैश्वानरः शङ्कनीयः ॥

साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

अग्निशरीरतया वैश्वानरस्योपासनार्थमग्निशब्दसामानाधिकरण्यनिर्देश इत्युक्तम् । विश्वेषां नराणां नेतृत्वादिना संव-

(१) ' हृदयादिस्वस्या ' क० ' हृदयादिस्थानस्वस्या ' पा०

(२) ' चेन्न ' ग०

(३) ' इत्यनेन ' ग०

न्धेन(१) यथा वैश्वानरशब्दः परमात्मनि वर्तते तथैवाग्निशब्दस्याप्यग्रनयनादिना योगेन साक्षात्परमात्मनि वृत्तौ न काश्चिद्विरोध इति जैमिनिराचार्यो मन्यते ॥

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानं(२) वैश्वानरम्" इति द्युप्रभृतिपृथिव्यन्तप्रदेश (३)संबन्धिन्या मात्रयाऽव(४)च्छिन्नत्वमनवच्छिन्नस्य(५) परमात्मनो वैश्वानरस्य कथमुपपद्यत इत्यत्राह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

अनवच्छिन्नस्यैव परमात्मन उपासका(६)भिव्यक्त्यर्थं द्युप्रभृतिप्रदेश(७)परिछिन्नत्वमित्याश्मरथ्य आचार्यो मन्यते ॥

द्युप्रभृतिप्रदेशा(८)वछेदेनाभिव्यक्तस्य परमात्मनो द्युभ्वादित्यादीनां (९) मूर्द्धाद्यवयवकल्पनं किमर्थमिति चेत्तत्राह—

अनुस्मृतेर्बादरिः ॥ ३१ ॥

अनुस्मृतिरुपासनम् । ब्रह्मप्राप्तये तथोपासनार्थं मूर्द्धप्रभृतिपादान्तदेहपरिकल्पनमिति बादरिराचार्यो मन्यते ॥

अयं (१०) वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्य उपदिश्यते चेत् "उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः"

(१) 'नेतृत्वादिसंबन्धेन' क० (२) 'विमानमात्मानं' मु०
(३) 'पृथिव्यन्तः प्रादेश' ग० (४) 'मात्रया परि' मु०
(५) 'मात्रयाऽवच्छिन्नस्यैव' ग० (६) 'उपासना' मु०
(७) 'द्युप्रभृतिप्रादेश' ग० 'द्युप्रभृतिपृथिव्यान्तप्रदेश' मु०
(८) 'प्रादेशा' ग०
(९) 'दूय्यादीनां' क० 'अग्निद्युभ्वादित्यादीनां' ग०
(१०) 'कथं' पा०

इत्यादिना उपासकशरीरावयवानां गार्हपत्यादिपरिकल्पनं किमर्थमित्यत्राह(१)—

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३२॥

वैश्वानरविद्याऽङ्गभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय गार्हपत्यादिपरिकल्पनमिति जैमिनिराचार्यो मन्यते । तथा ह्यग्निहोत्रसंपत्तिमेव दर्शयतीयं श्रुतिः प्राणाहुतिं विधाय "अथ य एवं विद्वानग्निहोत्रं जुहोति" इति ॥ उक्तानामर्थानां पूजितत्वख्यापनायाचार्यग्रहणम् ॥

आमनन्ति चैनमस्मिन् ॥ ३३ ॥

एनं परम(२) पुरुषं वैश्वानरं द्युभ्वादित्यादि(३)देहमस्मिन्नुपासकदेहे प्राणाग्निहोत्रेणाराध्यत्वायामनन्ति हि "तस्य ह वा एतस्य वैश्वानरस्य मूर्द्धैव सुतेजाः" इत्यादिना । उपासकस्य मूर्द्धा(४)दिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्द्धादय इति प्राणाग्निहोत्रवेलायामनुसंधेया इत्यर्थः ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमाध्यायस्य द्वितीयः पादः ॥

---

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

आथर्वणे "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह-

(१) 'इत्यत आह' ग०
(२) 'परम' इति क० पुस्तकेनास्ति।
(३) 'द्युभ्वादि' मु० 'दूभ्वादि' क०
(४) 'उपासकमूर्द्धा' मु०

प्राणैश्च सर्वैः, तमेवैकं जानथात्मानम् ” इत्यत्र द्युपृथिव्यादीनामायतनं किं जीव उत परमात्मेति संशयः ॥ जीव इति पूर्वः पक्षः । मनःप्रभृतीन्द्रियाधारत्वश्रुतेः । उत्तरत्र नाडीसंबन्धाज्जायमानत्वश्रुतेश्च ॥ राद्धान्तस्तु—निरुपाधिकात्मत्वाम्रुतसेतुत्वयोः परमात्मधर्मयोः श्रवणात्परमात्मैवायम् । सर्वनियन्तृ(१)तयाऽऽप्नोतीति ह्यात्मा । अमृतस्य प्रापकतया सेतुश्च स एव । नाडी संबन्धो बहुधा जायमनत्वं च “ सन्ततं शिराभिस्तु लम्बत्याकाशसन्निभम् । अजायमानो बहुधा विजायते ” इत्यादिषु (२) सर्वसमाश्रयणीयत्वाया(३)जहत्स्वभावस्यैव परमात्मनो दृश्यते ॥ सूत्रार्थस्तु—द्युपृथिव्यादीनामायतनं परमात्मा । स्वशब्दात्तदसाधारणात्मादिशब्दात् ॥

मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

“ तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्” पुण्यपापे विधूय नामरूपाद्विमुक्त इति च बन्धान्मुक्तस्य प्राप्यतया व्यपदेशाच्चायं परमात्मा ॥

नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

आनुमानम(४)नुमानगम्यं प्रधानं यथा तद्वाचिशब्दाभावादिह(५) न गृह्यते तथा प्राणभृदपीत्यर्थः।अतश्चायं परमात्मा॥

(१) ‘ सर्व नियन्तृ ’ मु० (२) ‘ इत्यादिकं ’ ग०
(३) ‘ णीयत्वाद ’ ग०
(४) ग० पुस्तके “ आनुमानम ” इत्यंशो नास्ति ।
(५) ‘ भावाच्चादिह ’ मु०

भेदव्यपदेशाच्च ॥ ४ ॥

" अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम् " इत्यादिना जीवाद्भेदेन व्यपदेशाच्चायं परमात्मा ॥

प्रकरणात् ॥ ५ ॥

" अथ परा यया तदक्षरमधिगम्यते " इत्यादिना परमात्मन एव प्रकृतत्वात् ॥

स्थित्यदनाभ्यां च ॥ ६ ॥

"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति कर्मफलमनश्नतः परमात्मनो दीप्यमानतया स्थितेर्जीवस्य कर्मपरवशतया तत्फला(१)दनाच परमात्मनो जीवाद्भेदावगमाद्-द्युसेतुत्व (२) द्युभ्वाद्यायतनं न जीवः । " अदृश्यत्वादिगुणकः" इत्यनेन परमात्मत्वे स्थापितेऽपि (३) नाडीसंबन्धजायमानत्वलिङ्गाद्या प्रकरणविच्छेदाशङ्का सा निराकृता "द्युभ्वाद्यायतनम् " इति । वैश्वानरस्य त्रैलोक्यशरीरत्वादिना परमात्मत्वनिर्णय इति मध्ये वैश्वानरविद्या निरूपिता ॥

( भूमाधिकरणम् । )

भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥

छान्दोग्ये " यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा " इत्यत्र भूमशब्दनिर्दिष्टो निरतिशयवैपुल्यविशिष्टसुखस्वरूपः किं प्रत्यगात्मोत परमात्मेति संशयः ॥ प्रत्यगात्मेति पूर्वः पक्षः । "तरति शोकमात्मवित्" इति

---

(१) ' वशतया फला ' ग०
(२) ' सेतुर्द्यु ' मु०
(३) ' स्थापिते ' क०

प्रक्रम्य (१) नामादिपरंपरयोत्तरभूयस्त्वेन प्रश्नप्रतिवचनाभ्यां प्रवृत्तस्यात्मोपदेशस्य प्राणशब्दनिर्दिष्टे प्रत्य(२)गात्मनि समाप्तिदर्शनात्प्रत्यगात्मन एव भूमसंशब्दनमिति निश्चीयते ॥ राद्धान्तस्तु—यद्यपि प्रश्नप्रतिवचनाभ्यामुत्तरोत्तरभूयस्त्ववचनं प्राणे पर्यवसितं तथापि प्राणवेदिनोऽतिवादित्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदति" इति तुशब्देनोपासकभेदं प्रतिपाद्य तस्य सत्योपासकस्य पूर्वस्मादाधिक्योपदेशात्तत्सशब्दाभिधेयं (३) परं ब्रह्मैव भूमविशिष्टमिति ॥ सूत्रार्थस्तु—भूमगुणविशिष्टं परं ब्रह्मैव । संप्रसादादध्युपदेशात् । संप्रसादः प्रत्यगात्मा "स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य" इत्यु(४)पनिषत्प्रसिद्धेः । "एष तु वा अति (५) वदति" इति प्रत्यगात्मनोऽधिकतयोपदेशात् । अतिवादित्वं हि स्वोपास्याधिक्यवादित्वम् ॥

धर्मोपपत्तेश्च ॥ ८ ॥

स्वाभाविकामृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वोत्पत्तिहेतुत्वादीनां भूम्नि श्रूयमाणानां धर्माणां परस्मिन्नेव ब्रह्मण्युपपत्तेश्च भूमा परं ब्रह्मैव (६) ॥

( अक्षराधिकरणम् । )

अक्षरमम्बरान्तधृतेः ॥ ९ ॥

वाजिनां गार्गिप्रश्ने (७) "सहो वाचैतद्वै तदक्षरं गार्गि ब्रा-

(१) 'प्रकृत्य' ग०
(२) 'निर्दिष्टप्रत्य' क०
(३) 'शब्दाभिधेयं' ग०
(४) 'इत्याद्यु' मु०
(५) 'धा वाति ग०
(६) 'परं ब्रह्म' क०
(७) 'गार्गीप्रश्ने' मु०

क्षणा अभियदन्त्यस्थूलमनएवह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यत्राक्षरशब्दनिर्दिष्टं प्रधानं जीवो वेति परमात्मेति संशयः॥ प्रधानं जीवो वा न परमात्मेति पूर्वः पक्षः । "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्युक्त (१) आकाशाधारतयोच्यमानमक्षरं प्रधान जीवो वा।प्रधानस्य विकाराधारत्वात्(२)। जीवस्याचिद्वस्त्वाधारत्वात् । न परमात्मेति (३)॥ राद्धान्तस्तु— " यदूर्ध्वं गार्गि दिवः " इत्यारभ्य कालत्रयवर्तिनः कृत्स्नस्याधारतया निर्दिष्ट आकाशोऽव्याकृतमेव । न वायुमानाकाशः। ततः पश्चात् " कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च " इति पृष्टे तदा(४)धारतयोच्यमानमेतदक्षरं न प्रधानं भवितुमर्हति । नापि-जीवः । " एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः " इत्यारभ्य प्रशासनात्सर्वाधारत्वश्रुतेः॥ सूत्रार्थस्तु—" एतद्वै तदक्षरं गार्गि "इति निर्दिष्टमक्षरं परमात्मा । अम्बरान्तधृतेः । अम्बरं वायुमानाकाशः । अम्बरान्तोऽम्बरपा(५)रभूतः । अम्बरकारणमिति यावत्।कारणापत्तिरेव हि कार्यस्यान्तः। स चाम्बरान्तोऽव्याकृतं प्रधानम् । तस्य धृतेर्धारणात् । अव्याकृतस्यापि धृतेरक्षरं परमात्मैवेत्यर्थः॥

एवं तर्हि जीवो भवितुमर्हति तस्य प्रधानधृत्युपपत्तेरित्याशङ्क्याह—

सा च प्रशासनात् ॥ १० ॥

सा चाम्बरान्तधृतिः "एतस्य वाऽक्षरस्य प्रशासने गार्गि"-

---

(१) ' इत्युक्तः ' ग० (२) ' स्पदत्वात् ' ग०
(३) ' न परमात्मेति ' इति क० ग० पुस्तकयोर्नास्ति ।
(४) ' आकाशा ' ग० (५) ' अम्बराधारभूतः ' ग०

इति प्रशासनाच्छ्रूयते । प्रशासनं प्रकृष्टं शासनम् । अप्रतिहताज्ञा । न चाप्रतिहताज्ञया कृत्स्नस्य चिदचिदात्मकस्य जगतो धृतिर्जीव उप(१)पद्यते । अतो न जीवः ॥

अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावोऽन्यत्वमस्याक्षरस्य परमपुरुषादन्यत्वं व्यावर्त्तयति वाक्यशेषः । अदृष्टं द्रष्टृ (२) साक्षिना सर्वैरेवादृष्टमेतदक्षरं सर्वस्य द्रष्टृ(३)त्यादि प्रधानजीवयोरसंभावनीयार्थप्रतिपादनात् ॥

( ईक्षतिकर्माधिकरणम् । )

ईक्षतिकर्म व्यपदेशात्सः ॥ १२॥

आथर्वणिकानां सत्यकामप्रश्ने " यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत " इत्यारभ्य " स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इत्यत्र ध्यायतीक्षतिकर्मतया व्यपदिष्टः परमपुरुषः किं हिरण्यगर्भ उत (४) परब्रह्मभूतः पुरुषोत्तम इति संशयः ॥ हिरण्यगर्भ इति पूर्वः पक्षः । पूर्वत्रैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिं फलं (५) द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिं च फलमभिधायानन्तरम् " यः पुनरेतं त्रिमात्रेण " इति त्रिमात्रं प्रणवमुपासीनस्य फलत्वेनोच्यमानब्रह्मलोकस्थपुरुषेक्षणा (६) कर्मभूतश्चतुर्मुख एवेति विज्ञायते (७) । मनुष्यलोकान्तरिक्षलोकमा-

---

(१) ' जीवस्योप ' क०
(२) ' अदृष्टो द्रष्टेत्या ' ग०
(३) ' द्रष्टे ' ग०
(४) ' किं ' क०
(५) ' प्राप्तिफल ' ग०
(६) ' लोकस्य पुरुषेक्षण ' ग० ' ब्रह्मलोकस्थपुरुष ईक्षणा ' पा०
(७) ' ज्ञायते ' ग०

हृचयाद्ब्रह्मलोकोऽपि क्षेत्रज्ञलोक इति निश्चयात् ॥ राद्धान्तस्तु "परात्परं पुरिशयं पुरुषमीक्षते" इतीक्षतिकर्मतया निर्दिष्टपरमपुरुष(१)विषये श्लोके "तमोंकारेणैवायनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं च" इति निरुपाधिकशान्तत्वामृतत्वादि(२)व्यपदेशात्परमात्मैवायमिति निश्चीयते। एव परमात्मत्वे निश्चिते ब्रह्मलोकशब्दश्च तत्स्थानमेवाभिदधातीत्यवगम्यते । तद्विषयोदाहृते च श्लोके "यत्तत्कवयो वेदयन्ति (३) । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति (४) सूरिभिर्द्रष्टव्यत्ववचनं तदेव द्रढयति ॥ सूत्रार्थस्तु—इक्षतिकर्म स परमात्मा । ध्यायतीक्षत्योरेकविषयत्वेन ध्यायतिकर्मापि स एवेत्यर्थः । व्यपदेशात् । तद्विषयतया "शान्तमजरममृतमभयं परं च" इति परमात्मधर्माणां व्यपदेशात् ॥

(दहराधिकरणम् ।)

## दहर उत्तरेभ्यः ॥ १३ ॥

छान्दोग्ये "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यत्र हृदयपुण्डरीकमध्यवर्तिदहराकाशः श्रूयमाणः किं भूताकाश उत जीवोऽथ परमात्मेति संशयः ॥ प्रथमं तावद्भूताकाश इति युक्तमाश्रयितुमिति पूर्वः पक्षः । (५) भूताकाशे प्रसिद्धिप्राचुर्यात् । प्रा-

(१) 'निर्दिष्ट पुरुष' मु० (२) 'शान्तत्वादि' ग०
(३) 'वेदयन्ते' मु० (४) 'इत्येवमादिभि.' मु०
(५) 'भूताकाशे' इत्यत आरभ्य 'आकाशशब्दस्य' इत्यधिकं मुद्रिते ।

काशान्तर्वर्तिनोऽन्यस्यान्वेष्टव्यताप्रतीतेश्च ॥ राद्धान्तस्तु–"किं तदत्र विद्यते यदन्वेष्टव्यम्" इति चोदिते(१)"यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः (२)" इत्यारभ्य "एतत्सत्यं ब्रह्मपुरम्" इत्यन्तेन दहराकाशस्यातिमहत्त्वसर्वाश्रयत्वाजरत्वसत्यत्वाद्यभिधाय "अस्मिन्कामाः समाहिताः" इत्याकाशान्तर्वर्तिनोऽन्वेष्टव्याः कामा इति प्रतिपाद्य कोऽयं दहराकाशशब्दनिर्दिष्टः के तदाश्रयाः कामा इत्यपेक्षायां "एष आत्माऽपहत(३)पाप्मा" इत्यारभ्य "सत्यसंकल्पः" इत्यन्तेनाकाशशब्दनिर्दिष्ट आत्मा कामाश्चापहतपाप्मत्वादयस्तद्विशेषणभूता इति प्रतिपादयद्वाक्यमपहतपाप्मत्वादिविशिष्टमा(४)त्मानमाह। अत(५) उपक्रमे चान्वेष्टव्यतया प्रतिज्ञात आकाश आत्मा, एतद्विशेषणभूता अपहतपाप्मत्वादयः कामा इति ज्ञापयद्वाक्यमिदम् (६) "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इत्युपसंहरति। अतो(७)यं दहराकाशोऽपहतपाप्मत्वादिविशिष्टः परमात्मेति निश्चीयते। न भूताकाशादिरिति (८)॥ एवं तस्मिन्वाक्ये "अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय" इति प्रत्यगात्मनः प्रतीतेस्तस्य चोत्तरत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणकत्वावगमात्प्रत्य-

---

(१) 'चोदितो' ग०

(२) मुद्रिते 'तावानेषोऽन्तर्हृदय आकाशः' इत्ययं नास्ति।

(३) 'एषोऽपहत' क०

(४) 'विशिष्टपरमा' मु०  (५) 'अतः' इति मुद्रिते नास्ति।

(६) 'अत उपक्रमे "दहरोऽस्मिन्नन्तर आकाशः" इति निर्दिष्ट आत्मा "तस्मिन्यदन्तः" इति कामा "तदन्वेष्टव्यम्" इति च तदुभयमन्वेष्टव्यमिति ज्ञापयद्वाक्यम्' इति क०

(७) 'अत्रा' ग०  (८) 'काश इति' क०

गात्मैव दहराकाश इति पूर्वपक्षी मन्यते ॥ राद्धान्ती तु—प्रत्यगात्मा कर्मपरवशतया जागरितस्वप्नसुषुप्त्याद्यवस्थाभितिरोहितापहतपाप्मत्वादिकः परमात्मानमुपसंपन्नस्तत्प्रसादादाविर्भूतगुणकः(१) प्रजापतिवाक्ये प्रतिपादितः, दहराकाशस्त्वतिरोहितनिरुपाधिकापहतपाप्मत्वादिकः प्रत्यगात्मन्यसंभावनीयजगद्विधरणसमस्तचिदचिद्वस्तुनियमनाद्यनन्तगुणकः प्रतिपन्न इति नायं प्रत्यगात्मा दहराकाशः, अपि तु परमात्मैवेति मन्यते ॥ सूत्रार्थस्तु–दहराकाशः परं ब्रह्म । उत्तरेभ्यो वाक्यगतेभ्योऽपहतपाप्मत्वादिपरमात्मासाधारणधर्मेभ्यो हेतुभ्यः ॥

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥

अस्मिन्दहराकाशे सर्वासां प्रजानां तम(२)जानतीनामहरहर्या गतिः श्रूयते, यश्च दहराकाशपरा(३)मर्शरूपैतच्छब्दसमानाधिकरणतया प्रयुक्तो ब्रह्मलोकशब्द(४)स्ताभ्यां दहराकाशः परं ब्रह्मेत्यवगम्यते " तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः " इति । तथाहि दृष्टं तथा ह्यन्यत्र परस्मिन्ब्रह्मण्येव रूपं गमनं दृष्टं "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामहे " इति " स त आगम्य न विदुः सत आगच्छामहे " इति । तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मणि (५) दृष्टः " एष ब्रह्मलोकः

---

(१) ' गुण ' क०
(२) ' प्रजानाम ' मु०
(३) ' दहराकाशाय ' मु०
(४) ' ब्रह्मशब्द. ' क०
(५) ' परस्मिन्ब्रह्मण्येव ' मु०

सम्राडिति होवाच " इति । लिङ्गं च मा भूदन्यत्र दर्शनम् । अस्मिन्प्रकरणे सर्वासां प्रजानां श्रूयमाणमहरहर्गमनं ब्रह्मलोकशब्दश्च दहराकाशस्य परमात्मत्वे पर्याप्तं लिङ्गम्। चशब्दोऽवधारणे । एतदेव पर्याप्तमित्यर्थः ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

अस्य धृताख्यस्य परमात्मनो महिम्नोऽस्मिन्दहराकाश उपलब्धेरयं परमात्मा । धृतिर्जगद्विधरणं परमात्मनो महिमेत्यन्यत्रावगम्यते " एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय " इति । स चास्मिन्द(१)हराकाश उपलभ्यते " अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय " इति ॥

## प्रसिद्धेश्च ॥ १६ ॥

" को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते " इत्यादिष्वाकाशशब्दस्य परस्मिन्ब्रह्मणि प्रसिद्धेराकाशशब्द एव परमात्मधर्मविशेषितो भूताकाशशङ्कां निवर्तयतीत्यर्थः ॥

## इतरपरमर्शात्स इति चेन्नासंभवात् ॥ १७ ॥

परमात्मन इतरो जीवः । " अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय " इति जीवस्य परामर्शात्स एव दहराकाश इति चेत्तन्न (२) । पूर्वोक्तानां गुणानां तस्मिन्नसंभवात् ॥

---

(१) ' स च द ' क० (२) ' चेन्न ' ग०

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरात्प्रजापतिवाक्यादपहतपाप्मत्वादिगुणको जीवोऽवगम्यत इति चेत्तन्न (१)। जागरिताद्यवस्थाभिरनादिकालप्रवृत्ताभिः पुण्यपापरूपकर्म(२)मूलाभिस्तिरोहितगुणकः परब्रह्मोपासनजनिततदुपसंपत्त्याविर्भूतस्वरूपोऽसौ जीवस्तत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणकः कीर्तितः। दहराकाशस्त्वतिरोहितस्वरूपापहतपाप्मत्वादिगुणक इत्यतोऽस्मिन्दहराकाशे न जीवाशङ्का ॥

दहरवाक्ये जीवपरामर्शः किमर्थमिति चेत्तत्राह—

अन्यार्थश्च परामर्शः ॥ १९ ॥

"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति परज्योतिःस्वरूपदहराकाशोपसंपत्त्याऽस्य जीवस्याऽनृततिरोहित(३)स्वरूपस्य स्वरूपाविर्भावो भवतीति दहराकाशस्य जगद्विधरणादिवज्जीवस्वरूपाविर्भावापादनरूपसंपद्विशेषप्रतिपादनार्थो जीवपरामर्शः ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

"दहरोऽस्मिन्" इत्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्तन्न यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तमिति(४) "निचाय्यत्वादेवं व्योमवत्" इत्यनेन ॥

अनुकृतेस्तस्य च ॥ २१ ॥

अनुकृतिरनुकारः। तस्य परमात्मनोऽनुकाराद्धि जीवस्या-

(१) 'चेन्न' ग० (२) 'पुण्यपापकर्म' ग०
(३) 'जीवस्यातिरोहित' ग०
(४) 'इति' काशी मुद्रिते नास्ति।

विर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणकत्वम् । अनुकर्तुर्जीवादनुकार्यः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव । तदनुकारश्च तत्साम्यापत्तिः । श्रूयते च (१) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति ॥

अपि स्मर्यते ॥ २२ ॥

स्मर्यते च तदुपासनात्तत्साम्यापत्तिरूपानुकारिजीवस्य—
"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति ॥

(प्रमिताधिकरणम् ।)

शब्दादेव प्रमितः ॥ २३ ॥

कठवल्लीष्वाम्नायते "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य न ततो विजुगुप्सते, एतद्वै तत्" उत्तरत्र "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" तथोपरिष्टात् "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः" इति । अत्राङ्गुष्ठप्रमितो जीवात्मोत (२) परमात्मेति संशयः ॥ जीवात्मेति पूर्वः पक्षः । अन्यत्र स्पष्टजीवभावे (३) पुरुषेऽङ्गुष्ठ प्रमितत्वश्रुतेः (४) "प्राणाधिपः संचरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः" इति ॥ राद्धान्तस्तु—तत्र "स्वकर्मभिः" इति जीवभावनिश्चयवदत्रापि "ईशानो भूतभव्यस्य"

(१) 'तत्साम्यापत्तिः श्रूयते' मु०
(२) 'जीवो वोत' क०
(३) 'अन्यत्र स्वीकृतस्पष्टजीवभावे' मु०
(४) 'त्वं श्रूयते' ग०

इतीशितृत्वदर्शनात् परमात्मैवेति ॥ सूत्रार्थस्तु—शब्दादेव प्रमितः । अङ्गुष्ठप्रमितः परमात्मैव । ईशानो भूतभव्यस्येति परमात्मवाचिशब्दात् ॥

कथमनवच्छिन्नस्य परमात्मनोऽङ्गुष्ठप्रमितत्व(१)मित्याशङ्क्याह—

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठमात्रत्वात् तदपेक्षयेदमङ्गुष्ठप्रमितत्वम् । मनुष्याणामेवोपासकत्वसंभावनया मनुष्यानधिकृत्य प्रवृत्तत्वाच्छास्त्रस्य मनुष्यहृदया(२)पेक्षयेदमुक्तम् । स्थितं तावदुत्तरत्र समापयिष्यते ॥

( देवताऽधिकरणम् । )

तदुपर्यपि बादरायणः संभवात् ॥ २५ ॥

मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्ते तत्प्रसङ्गेन देवादीनामपि ब्रह्मविद्यायामधिकारोऽस्ति नेति चिन्त्यते ॥ न देवादीनामधिकारोऽस्ति(३)पूर्वः पक्षः । परिनिष्पन्ने ब्रह्मणि शब्दस्य प्रामाण्यसंभवेऽपि देवादीनां विग्रहादिमत्त्वे प्रमाणाभावात् मन्त्रार्थवादाना(४)मपि विधिशेषतया विग्रहादिसद्भावपरत्वाभावाच्च विग्रहनिर्वर्त्याहरहरनुष्ठीयमानविवेकादिसाधनसप्तकसंस्कृतमनोनिष्पाद्योपासननिर्वृत्तौ तेषां सामर्थ्याभावात् ॥ राद्धान्तस्तु—जगत्सृष्टिप्रकरणेषु नामरूपव्या-

---

(१) 'नोऽनच्छिन्नत्व' ग०  (२) 'स्त्रस्य हृद' क०
(३) 'देवादीनामधिकारो नास्तीति' क०
(४) 'वादादीनां' ग०

करणश्रुतेश्च देवादीनां विग्रहवत्त्वं (१) सिद्ध्यति । देवादीनां देहेन्द्रियादिकरणमेव हि नामरूपव्याकरणम् । मन्त्रार्थवादयोश्च तदुलब्धेस्तयोरनुष्ठेयप्रकाशनस्तुतिपरत्वेऽपि तदुपपत्तये तत्तद्भावे प्रामाण्याद्देवादीनां विग्रहादिमत्त्वसिद्धिः । न हि विग्रहादिमत्तया स्तुतिः प्रकाशनं च तदभावे संभवति । अतः सामर्थ्यसंभवात्तस्तेत्राधिकारः ॥ सूत्रार्थस्तु-तदुपर्यपि तेभ्यो मनुष्येभ्य उपरिवर्त्तमानानां देवादीनामप्यधिकारोऽस्ति । यद्वा तद्ब्रह्मोपासनमुपरि देवादिष्वपि संभवति । (२) तेषामपि ब्रह्मस्वरूपतदुपासनप्रकारज्ञानतदर्थित्वतदुपासन(३)सामर्थ्यसंभवात् । पूर्वोपार्जितज्ञानाविस्मरणात् ज्ञानसंभवः । तापत्रयाभिहतिपूर्वकब्रह्मगुणज्ञानाच्चार्थित्वसंभवः ।सृष्टिवाक्यमन्त्रार्थवादेषु विग्रहादिमत्त्व(४)दर्शनात्सामर्थ्यसंभवश्चेति भगवान्बादरायणो मन्यते ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२६॥

कर्मणि यागादौ विग्रहवत्त्वे सत्येकस्य युगपदनेकयागेषु सान्निधानानुपपत्तेर्विरोधः प्रसज्यत इति चेत्तन्न । शक्तिमतां सौभरिप्रभृतीनां युगपदनेकशरीरप्रतिपत्तिदर्शनात् ॥

शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥

विरोध इति वर्त्तते । मा भूत्कर्मणि विरोधः, शब्दे तु

---

(१) 'विग्रहादिमत्त्व' मु०

(२) 'यद्वा' इत्यादिपङ्क्तिः ग० पुस्तके नास्ति । क० पुस्तके तु 'सूत्रार्थस्तु' इत्यनन्तरं 'तद्ब्रह्मोपासन'मित्यादिग्रन्थ एवास्ति ।

(३) 'दान' मु० (४) 'विग्रहवत्त्वादि' मु०

वैदिके विरोधः प्रसज्यते, विग्रहवत्त्वे हि तेषां सावयवत्वेनोत्पत्तिविनाशयोगादुत्पत्तेः प्राग्विनाशादूर्ध्वं च वैदिकानामिन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादिति चेत्तन्न । अतः प्रभवात् । अतो वैदिकादेव शब्दादिन्द्रादेः प्रभवात् । पूर्वपूर्वेन्द्रादौ विनष्टे वैदिकादिन्द्राद्याकृतिविशेषवाचिनः शब्दादिन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजति प्रजापतिरिति वैदिकशब्दस्य न कश्चिद्विरोधः । न हि देवदत्तादिवदिन्द्रादिशब्दा व्यक्तिविशेषसंकेतपूर्वकाः प्रवृत्ताः । अपि तु गवादिशब्दवदाकृतिविशेषवाचिन इति तेषामपि नित्य एव वाच्यवाचकभावः । वैदिकादिन्द्रादिशब्दात्तदर्थविशेषं स्मृत्वा कुलालादिरिव घटादिकं प्रजापतिः सृजतीति कुतोऽवगम्यते । प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत् "वेदेन रूपे (१) व्याकरोत्सता सती प्रजापतिः" । तथा "स भूरिति व्याहरत्स भूमिमसृजत" इत्यादिका । स्मृतिरपि—

"सर्वेषां च स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥
नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥"

इत्यादिका ॥

अत एव च नित्यत्वं ॥ २८ ॥

यतः प्रजापतिर्वैदिकाच्छब्दादर्थाकारं स्मृत्वा तदाकारं सर्वं सृजत्यतश्च वासिष्ठविश्वामित्रादीनां मन्त्रसूक्तादिकर्तृत्वेऽपि मन्त्रादिमयस्य वेदस्य नित्यत्वं तिष्ठत्येव । प्रजापतिर्हि

(१) 'नामरूपे' ग०

नैमित्तिकप्रलयानन्तरं "मन्त्रकृतो वृणीते । विश्वामित्रस्य सूक्तं भवति" इत्यादिवेदशब्देभ्योऽनधीतमन्त्रादिदर्शनशक्तवसिष्ठाद्याकृतिविशेषं स्मृत्वा वासिष्ठत्वादिपदप्राप्तयेऽनुष्ठितकर्मविशेषांश्चानुस्मृत्य तदाकारां(१)स्तावद्वसिष्ठादीन्सृजति । ते चानधीत्यैव वेदैकदेशभूतमन्त्रादीन्स्वरतो वर्णतश्चास्खलितान्पठन्ति । तदेषां मन्त्रादिकृत्त्वेऽपि वेदस्य नित्यत्वमुपपद्यते ॥

प्रजापतिप्रभृतिषु सर्वेषु तत्त्वेष्वव्याकृतपर्यन्तेष्वव्याकृतपरिणामरूपेषु (२) शब्दमयेषु च वेदेषु विनष्टेष्वव्याकृतसृष्ट्यावृत्तौ कथं वेदस्य नित्यत्वमित्यत आह—

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ २९ ॥

प्राकृत(३)सृष्ट्यावृत्तावपि सृज्यानां समाननामरूपत्वादेव न कश्चिद्विरोधः । आदिसर्गेऽपि हि परमपुरुषः पूर्वसंस्थानं जगत्स्मरंस्तथैव सृजति, वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य हिरण्यगर्भाय ददाति । पूर्वसंस्थानमेव जगत्सृजतीति कथमवगम्यते । दर्शनात्स्मृतेश्च । दर्शनं श्रुतिः "अहोरात्राणि विदधद्विश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवञ्च पृथिवीं चान्तरिक्षमथो सुवः" इति "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति च । स्मृतिरपि—

"यथर्तुष्वृतु(४)लिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥" इति ।

---

(१) 'तदाकारविशेषां' मु० (२) 'परिणामरूप' ग०
(३) 'अव्याकृत' मु० (४) 'यथा तु ऋतु' ग०

इति । एतदेव वेदस्य नित्यत्वं यत्पूर्वपूर्वोच्चारणक्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम् । परमपुरुषोऽपि स्वस्वरूपस्वाराधनतत्फलयाथात्म्यावबोधि वेदं स्वस्वरूपवन्नित्यमेव पूर्वानुपूर्वीविशिष्टं स्मृत्वाऽऽ(१)विष्करोति । अतो देवादीनां ब्रह्मविद्याधिकारे न कश्चिद्विरोधः ॥

( मध्वधिकरणम् । )

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३० ॥

छन्दोग्ये " असौ वा आदित्यो देव मधु " इत्युपक्रम्य "तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति" इत्युक्त्वा "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति"इत्यादिना ऋग्यजुःसामादिवेदोदितकर्मसंपाद्यरसाधारतया मधुमयस्यादित्यस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वांशान्वसुरुद्रादित्यमरुत्साध्यनाम्नां देवगणानां भोग्यत्वेनाभिधाय तैर्भुज्यमानाकारेणादित्यंशानुपास्यानुपदिश्य तानेवादित्यांशांस्तथाभूतान्प्राप्यानुपदिशति । एवमादिषूपासनेषु वस्वादित्यादीना(२)मधिकारोऽस्ति नेति संशयः ॥ नास्त्यधिकार इति पूर्वः पक्षः । वस्वादीनामुपास्यान्तर्गतत्वेन कर्मकर्तृभावविरोधात् । प्राप्यस्य वसुत्वादेः प्राप्तत्वाच्च ॥ राद्धान्तस्तु—ब्रह्मण एव तदवस्थस्योपास्यत्वाद्वस्वादीनां सतां स्वावस्थब्रह्मानुसन्धानाविरोधात्कल्पान्तरे वसुत्वादेः प्राप्यत्वाविरोधाच्च वस्वादीनामप्यधिकारः संभवतीति ॥ सूत्रार्थस्तु—मधुविद्यादिषु वस्वादीनामनधिकारं जैमिनिर्मन्यते । असंभवात् वस्वादीनामेवोपास्यानामुपासकत्वासंभवात् । वसुत्वादेः प्राप्तत्वादेव प्राप्यत्वासंभवाच्च ॥

---

(१) 'विशिष्टमा' ग० (२) 'वस्वित्यादीना' ग०

## ज्योतिषि भावाच्च ॥ ३१ ॥

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि परस्मिन्ब्रह्मणि देवमनुष्ययोरधिकारसाधारण्ये सत्यपि ज्योतिषां ज्योतिः परं ब्रह्म देवा उपासत इति विशेषवचनं वस्वादीनां कर्मकर्तृभावविरोधात्तेषु तेषामनधिकारं द्योतयति। देवा इति सामान्यवचनं च वस्वादिविशेषविषयमित्यवगम्यते। अन्येषामविरोधात् ॥

## भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥

तुशब्दः पक्षं व्यावर्तयति। वस्वादीनां मधुविद्यादिष्वधिकारसद्भावं भगवान्बादरायणो मन्यते। अस्ति हि वस्वादीनामेवोपास्यत्वं प्राप्यत्वं च। इदानीं वसु(१)नामेव सतां कल्पान्तरे वसुत्वस्य प्राप्यत्वसंभवात् प्राप्यत्वं संभवति (२)। स्वात्मनां ब्रह्मभावानुसन्धानसंभवादुपास्यत्वं च संभवति। "य एतामेवं ब्रह्मोपनिषदं वेद" इति हि कृत्स्नाया मधुविद्याया ब्रह्मनिष्ठत्वमवगम्यन्ते ॥

( अपशूद्राधिकरणम्। )

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३३॥

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति नेति संशयः॥ अस्तीति पूर्वः पक्षः। अर्थित्वसामर्थ्यसंभवात्। शूद्रस्यानग्निविद्यत्वेऽपि मनोवृत्तिमात्र(३)त्वादुपासनस्य संभवति हि सामर्थ्यम्। ब्रह्मस्वरूपतदुपासनप्रकारज्ञानं चेतिहासपुराणश्र-

---

(१) 'वस्वादीनां' ग०

(२) 'प्राप्यत्वं संभवति' इत्यंशः क० पुस्तके नास्ति।

(३) 'मनोमात्रनिर्वर्त्य' ग०

जानश्रुतेः शुश्रूषोः क्षत्रियत्वं प्रतीतम् ॥

उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उपरिष्टाचास्यां विद्यायां(१) ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते " अथ ह शौनकं च कापेयमभिप्रतारिणं च " इत्यादौ । अभिप्रतारी हि चैत्ररथः क्षत्रियः । अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते। प्रकरणान्तरे हि कापेयसहचारिणश्चैत्ररथत्वं क्षत्रियत्वं चावगतं "एतेन वै चैत्ररथं कापेया अयाजयन् " इति " तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत" इति च। अतोऽस्यां विद्यायामन्वितो ब्राह्मणादितरो जानश्रुतिरपि क्षत्रियो भवितुमर्हति ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

विद्योपदेशे " उपत्वा नेष्ये " इत्युपनयनसंस्कारपरामर्शाच्छूद्रस्य तदभाववचनाच्च नाधिकारः। "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति " इति हि निषिध्यते ॥

तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ ॥

" नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर " इति शुश्रूषोर्जाबालेः शूद्रत्वाभावनिश्चय एवोपदेशप्रवृत्तेर्नाधिकारः शूद्रस्य (२) ॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य श्रवणाध्ययनादीनि हि प्रतिषिध्यन्ते " तस्माच्छूद्रसमीपे नाध्येतव्यम् " इति । अनुपशृण्वतो नाध्ययनादि संभवति ॥

---

(१) 'ब्रह्मविद्यायाम्' ग० (२) 'शूद्रस्य' इति मुद्रिते नास्ति।

पणादेव निष्पद्यते । अस्ति हि शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा " श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " इति । तथा तत्रैव विदुरादीनां ब्रह्मनिष्ठत्वं दृश्यते । उपनिषत्स्वपि " आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः " इति शूद्रशब्देनामन्त्र्य (१) ब्रह्मविद्योपदेशदर्शनाच्छूद्रस्याप्यधिकारः सूच्यते ॥ राद्धान्तस्तु—उपासनस्य मनोवृत्तिमात्रत्वेऽप्यनधीतवेदस्य शूद्रस्योपासनोपायभूतज्ञानासंभवान्न सामर्थ्यसंभवः । कर्मविधिवदुपासनविधयोऽपि त्रैवर्णिकविषयाध्ययनगृहीतस्वाध्यायोत्पन्नज्ञानमेवोपासनोपायतया स्वीकुर्वते । इतिहासाद्यपि स्वाध्यायसिद्धमेव ज्ञानमुपबृंहयतीति ततोऽपि नास्य ज्ञानलाभः । श्रवणानुज्ञा तु पापक्षयादिफला । विदुरादीनां तु भवान्तरवासनया ज्ञानलाभाद्ब्रह्मनिष्ठत्वम् । शूद्रेत्यामन्त्रणमपि न चतुर्थवर्णत्वेन, अपि तु ब्रह्मविद्यावैकल्याच्छुगस्य संजातेति। अतो न शूद्रस्याधिकारः॥ सूत्रार्थस्तु—ब्रह्मविद्यावैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैवाचार्यं प्रत्याद्रवणाच्चाचार्येणास्य शुश्रूषोर्विद्याऽलाभकृता शुकसूच्यते । हिशब्दो हेतौ। यस्मादस्य शुकसूच्यतेऽतः शोचनाच्छूद्र इति कृत्वाऽऽचार्यो रैक्वः जानश्रुतिं शूद्रेत्यामन्त्रयते, न जातियोगेनेत्यर्थः ॥

## क्षत्रियत्वगतेश्च ॥ ३४ ॥

अस्य शुश्रूषोः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् । प्रकरणोपक्रमे (२) हि " बहुदायी " इत्यादिना दानपतित्व(३)बहुतरपक्वान्नप्रदायित्वक्षत्तृप्रेषणबहुग्रामप्रदानैरस्य

(१) ' आमन्त्र्य ' ग०
(२) ' प्रकरणप्रक्रमे ' मु०
(३) ' दानवत्त्व ' क०

जानश्रुतेः शुश्रूषोः क्षत्रियत्वं प्रतीतम् ॥

उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उपरिष्टाद्यास्यां विद्यायां (१) ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते " अथ ह शौनकं च कापेयमभिप्रतारिणं च " इत्यादौ । अभिप्रतारी हि चैत्ररथः क्षत्रियः । अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते। प्रकरणान्तरे हि कापेयसहचारिणश्चैत्ररथत्वं क्षत्रियत्वं चावगतं " एतेन वै चैत्ररथं कापेया अयाजयन् " इति " तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत" इति च। अतोऽस्यां विद्यायामन्वितो ब्राह्मणादितरो जानश्रुतिरपि क्षत्रियो भवितुमर्हति ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

विद्योपदेशे " उपत्वा नेष्ये " इत्युपनयनसंस्कारपरामर्शाच्छूद्रस्य तदभाववचनाच्च नाधिकारः । " न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति " इति हि निषिध्यते ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

" नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर " इति शुश्रूषोर्जाबालेः शूद्रत्वाभावनिश्चय एवोपदेशप्रवृत्तेर्नाधिकारः शूद्रस्य (२) ॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य श्रवणाध्ययनादीनि हि प्रतिषिध्यन्ते " तस्माच्छूद्रसमीपे नाध्येतव्यम् " इति । अनुपशृण्वतो नाध्ययनादि सम्भवति ॥

---

(१) 'संवर्गविद्यायाम्' ग० (२) 'शूद्रस्य' इति मुद्रिते नास्ति ।

पणादेव निष्पद्यते । अस्ति हि शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा " श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " इति । तथा तत्रैव विदुरादीनां ब्रह्मनिष्ठत्वं दृश्यते । उपनिषत्स्वपि " आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः " इति शूद्रशब्देनामन्त्र्य (१) ब्रह्मविद्योपदेशदर्शनाच्छूद्रस्याप्यधिकारः सूच्यते ॥ राद्धान्तस्तु—उपासनस्य मनोवृत्तिमात्रत्वेऽप्यनधीतवेदस्य शूद्रस्योपासनोपायभूतज्ञानासंभवान्न सामर्थ्यसंभवः । कर्मविधिवदुपासनविधयोऽपि त्रैवर्णिकविषयाध्ययनगृहीतस्वाध्यायोत्पन्नज्ञानमेवोपासनोपायतया स्वीकुर्वते । इतिहासाद्यपि स्वाध्यायसिद्धमेव ज्ञानमुपबृंहयतीति ततोऽपि नास्य ज्ञानलाभः । श्रवणानुज्ञा तु पापक्षयादिफला । विदुरादीनां तु भवान्तरवासनया ज्ञानलाभाद्ब्रह्मनिष्ठत्वम् । शूद्रेत्यामन्त्रणमपि न चतुर्थवर्णत्वेन, अपि तु ब्रह्मविद्यावैकल्याच्छुगस्य संजातेति। अतो न शूद्रस्याधिकारः॥ सूत्रार्थस्तु—ब्रह्मविद्यावैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैवाचार्यं प्रत्याद्रवणाच्चाचार्येणास्य शुश्रूषोर्विद्याऽलाभकृता शुक्सूच्यते । हिशब्दो हेतौ। यस्मादस्य शुक्सूच्यतेऽतः शोचनाच्छूद्र इति कृत्वाऽऽचार्यो रैक्वः जानश्रुतिं शूद्रेत्यामन्त्रयते, न जातियोगेनेत्यर्थः ॥

## क्षत्रियत्वगतेश्च ॥ ३४ ॥

अस्य शुश्रूषोः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् । प्रकरणोपक्रमे (२) हि " बहुदायी " इत्यादिना दानपतित्व(३)बहुतरपक्वान्नप्रदायित्वक्षत्तृप्रेषणबहुग्रामप्रदानैरस्य

(१) ' आमन्त्र्ये ' ग०　　　(२) ' प्रकरणप्रक्रमे ' मु०
(३) ' दानवत्त्व ' क०

जानश्रुतेः शूश्रूषोः क्षत्रियत्वं प्रतीतम् ॥

उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उपरिष्टाद्यस्यां विद्यायां (१) ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते " अथ ह शौनकं च कापेयमभिप्रतारिणं च " इत्यादौ । अभिप्रतारी हि चैत्ररथः क्षत्रियः । अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्यालिङ्गादवगम्यते। प्रकरणान्तरे हि कापेयसहचारिणश्चैत्ररथत्वं क्षत्रियत्वं चावगतं "एतेन वै चैत्ररथं कापेया अयाजयन् " इति " तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत" इति च। अतोऽस्यां विद्यायामन्वितो ब्राह्मणादितरो जानश्रुतिरपि क्षत्रियो भवितुमर्हति ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

विद्योपदेशे " उपत्वा नेष्ये " इत्युपनयनसंस्कारपरामर्शाच्छूद्रस्य तदभाववचनाच्च नाधिकारः । "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति " इति हि निषिध्यते ॥

तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ ॥

" नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर " इति प्रवृत्तेर्जाबालेः शूद्रत्वाभावनिश्चय एवोपदेशप्रवृत्तेर्नाधिकारः शूद्रस्य (२) ॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य श्रवणाध्ययनादीनि हि प्रतिषिध्यन्ते " तस्माच्छूद्रसमीपे नाध्येतव्यम् " इति । अनुपशृण्वतो नाध्ययनादि संभवति ॥

---

(१) 'यस्यांविद्यायाम्' ग० (२) 'शूद्रस्य' इति मुद्रिते नास्ति ।

स्मृतेश्च ॥ ३९ ॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इति ॥

( प्रमिताधिकरणशेषः । )

प्रासङ्गिकं समाप्य प्रकृतं परिसमापयति(१)—

कम्पनात् ॥ ४० ॥

अङ्गुष्ठप्रमितप्रकरणमध्ये "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्, महद्भयं वज्रमुद्यतम्—भयादस्याग्निस्तपति" इत्यादौ प्राणशब्दनिर्दिष्टाङ्गुष्ठप्रमितजनितभयनिमित्ता(२)ऽग्निवायुसूर्यप्रभृतिकृत्स्नजगत्कम्पनाच्छ्रूयमाणादङ्गुष्ठप्रमितः परमात्मैवेति निश्चीयते ॥

ज्योतिर्दर्शनात् ॥ ४१ ॥

अस्मिन्नेव प्रकरणे तत्संबन्धितया "न तत्र सूर्यो भाति" इत्यारभ्य "तस्य भासा सर्वमिदं विभाति" इति सर्वेषां छादकस्यानवधिकातिशयस्य भाःशब्दाभिहितस्य ब्रह्मभूतस्य परस्य ज्योतिषो (३) दर्शनाच्चाङ्गुष्ठप्रमितः परमात्मा ॥

( अर्थान्तरत्वाधिकरणम् । )

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

छान्दोग्ये श्रूयते "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इति। अत्राकाशशब्दनिर्दिष्टः

---

(१) 'समापयति' ग०
(२) 'जनितभया' क०
(३) 'शब्दाभिहितस्य ज्योतिषो' क०

किं मुक्तात्मा उत परमात्मेति संशयः॥ मुक्त इति पूर्वः पक्षः। "धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति मुक्तस्यानन्तरमकृतत्वात् ॥ राद्धान्तस्तु—"नामरूपयोर्निर्वहिता ते यदन्तरा" इति स्वयमस्पृष्टनामरूपतया नामरूपयोर्निर्वोढृत्वेन श्रूयमाणोऽयमाकाशो बद्धमुक्तोभयावस्थात्मस्यगात्मनोऽर्थान्तरत्वात्परमात्मैव ॥ सूत्रार्थस्तु—आकाशः परमात्मा। अस्य नामरूपयोर्निर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात्। प्रत्यगात्मनो ह्यर्थान्तरभूत एव नामरूपयोर्निर्वोढा। बद्धावस्थ(१)स्तावन्नामरूपाभ्यां स्पृष्टस्तत्परवशश्चेति न निर्वोढा। मुक्तस्यापि जगद्व्यापाररहितत्वान्न निर्वोढृत्वम्। आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि (२) गृह्यन्ते। तानि निरुपाधिकानि मुक्तस्यापि न संभवन्ति॥

तत्त्वमस्यादिनैक्यव्यपदेशात् "नेह नानाऽस्ति" इति भेदप्रतिषेधाच्च न प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याशङ्क्याह—

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

व्यपदेशादिति वर्तते। "प्राज्ञेनात्मना संपरिष्वक्तः। प्राज्ञेनात्मनाऽन्वारूढः" इति सुषुप्त्युत्क्रान्त्योर्लुप्तसकलविशेषज्ञानात्प्रत्यगात्मनस्तदानीमेव सर्वज्ञतया भेदेन व्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूत एव परमात्मा॥

## पत्यादिशब्देभ्यः ॥ ४४ ॥

परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायं प्रत्यगात्मनोऽर्थान्तरभूतः (३)। "सर्वस्याधिपतिः सर्वस्य वशी

(१) 'बद्ध' ग०  (२) 'त्मत्वानि' क०
(३) 'अर्थान्तरभूतः परमात्मा' मु०

सर्वस्येशानः " इत्याद्यैश्वर्योपदेशभेदप्रतिषेधौ तु ब्रह्मकार्यत्वनिबन्धनाविति " तज्जलानिति । सर्वं खल्विदं ब्रह्म " इत्यादिश्रुतिभिरेव व्यक्तौ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
प्रथमाध्यायस्य तृतीयः पादः ।

---

( आनुमानिकाधिकरणम् )

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

कठवल्लीषु " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः, मनसस्तु (१) परा बुद्धिर्बुद्धेरात्मा महान्परः, महतः परमव्यक्तमव्यक्तात्पुरुषः परः, पुरुषान्न परं किं चित्सा काष्ठा सा परा गतिः " इत्यत्र किं सांख्योक्तप्रधानामव्यक्तशब्दाभिधेयमुत नेति संशयः ॥ प्रधानमिति पूर्वः पक्षः । " महतः परमव्यक्तम् " इत्यादिना तत्तन्त्रप्रक्रियाप्रत्यभिज्ञानात् " पुरुषान्न परं किं चित् " इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च ॥ राद्धान्तस्तु–नाव्यक्तशब्देन प्रधानमिह गृह्यते । पूर्वत्र "आत्मानं रथिनं विद्धि शरीरं रथमेव च " इत्यादिनोपासननिर्वृत्तये वश्येन्द्रियत्वापादनाय य आत्म(२)शरीरबुद्धिमनइन्द्रियविषया रथिरथसारथिप्रग्रहहयगोचरत्वेन रूपितास्तेषु वशीकार्यत्वे पराः " इन्द्रियेभ्यः परा " इत्यादिनोच्यते । तत्र चेन्द्रियादयः स्व-

---

(१) ' मनसश्च ' मु०
(२) ' ना आत्म ' क० ' नात्यात्म ' ग०

रथशब्देनैव गृह्यन्ते। रथत्वेन रूपितं शरीरमिहाव्यक्तपरिणामत्वे-नाव्यक्तशब्देन गृह्यत इति नेह तत्तन्त्रप्रक्रियाप्रसाभिज्ञागन्धः। "अव्यक्तात्पुरुषः परः" इति च न पञ्चविंशकः। अपि तु प्राप्यः परमात्मा सर्वान्तर्यामितयो(१)पासनस्याप्युपायभूत इति स इह वशीकार्यकाष्ठात्वेन "पुरुषान्न परं किं चित्" इत्युक्तः॥ सूत्रार्थस्तु—एकेषां कठानां शाखायामानुमानिकं प्रधानं जगत्कारणत्वेन "महतः परमव्यक्तम्" इत्याम्नायत इति चेत्तन्न। अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तगृहीतेः। पूर्वत्रात्मादिषु रथिरथादिरूपकविन्यस्तेषु रथत्वेन रूपितस्य शरीरस्यात्राव्यक्तशब्देन गृहीतेरित्यर्थः। अतो वशीकार्यत्वे परा इहोच्यन्ते। दर्शयति चैनमर्थमस्मिन्वाक्यविशेष इन्द्रियादीनां नियमनप्रकारं प्रतिपादयन् "यच्छेद्वाङ्मनसी" इत्यादिः (२)॥

कथमव्यक्तशब्दस्य शरीरं वाच्यं भवतीत्याशङ्क्याह—

सूक्ष्मं तु तदर्हत्वात्॥ २॥

तुशब्दोऽवधारणे। सूक्ष्ममव्यक्तमेवावस्थान्तरापन्नं शरीरं भवति तदवस्थस्यैव कार्यार्हत्वात् (३)॥

यदि रूपकविन्यस्ता आत्मादय एव वशीकार्यत्वे पराः "इन्द्रियेभ्यः पराः" इत्यादिना गृह्यन्ते तर्हि "अव्यक्तात्पुरुषः परः, पुरुषान्न परं किं चित्" इति पुरुषग्रहणं किमर्थमित्यत आह—

(१) 'अन्तर्यामितयो' मु०

(२) 'दर्शयति च तदेव श्रुतिः "यच्छेद्वाङ्मनसी" इत्यादिना' इति क०

(३) 'कार्यतार्हत्वात्' ग०

तधीनत्वादर्थवत् ॥ ३ ॥

अन्तर्यामिरूपेणावस्थितपुरुषाधीनत्वादात्मादिकं सर्वं रथित्वादिना रूपितमर्थवत्प्रयोजनवद्भवतीत्यतः उपासननिर्वृत्तौ वशीकार्यकाष्ठा परमपुरुष इति तदर्थमिह रूपकविन्यस्तेषु गृह्यमाणेषु परस्य पुरुषस्य(१) ग्रहणम् । उपासननिर्वृत्त्युपायकाष्ठा पुरुषः प्राप्यश्चेति "पुरुषान्न परं किं चित्सा काष्ठा सा परा गतिः" इत्युक्तम् ॥ भाष्यप्रक्रियया वा नेयमिदं सूत्रम् । परमपुरुषशरीरतया तदधीनत्वाद्भूतसूक्ष्ममव्याकृतमर्थवदिति तदिहाव्यक्तशब्देन गृह्यते । नाप्राधान्यात्मकं स्वनिष्ठं तन्त्रसिद्धमिति ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

यदि तन्त्रप्रक्रियेहाभिप्रेता तदाव्यक्तस्यापि ज्ञेयत्वं वक्तव्यम् । "व्यक्ताव्यक्तज्ञविज्ञानात्" इति हि तत्प्रक्रिया । न ह्यव्यक्तमिह ज्ञेयत्वेनोक्तम् । अतश्चात्र न तन्त्रप्रक्रियागन्धः ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

"अशब्दमस्पर्शम्" इत्युपक्रम्य "महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति प्रधानस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत् । तन्न । "अशब्दमस्पर्शम्" इत्यादिना प्राज्ञः परमपुरुष एव ह्यत्रोच्यते "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इति प्राज्ञस्यैव प्रकृतत्वात् ॥

(१) 'तदर्थमिह विन्यस्तेषु गृह्यमाणेषु पुरुषस्यापि' क०

त्रयाणामेवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अस्मिन्प्रकरणे "येयं प्रेते विचिकित्सा मनुष्ये" इत्यारभ्यासमाप्तेरुपास्यो(१)पासनोपासकानां त्रयाणामेव ज्ञेयत्वेनोपन्यासः प्रश्नश्च दृश्यते । न प्रधानादेस्तान्त्रिकस्यापि । अतश्च न प्रधानमिह ज्ञेयत्वेनोक्तम् ॥

महद्वच्च ॥ ७ ॥

यथा "बुद्धेरात्मा महान्परः" इत्यात्मशब्दसामानाधिकरण्यान्महच्छब्देन न तान्त्रिकं महत्तत्त्वं गृह्यते एवमव्यक्तशब्देनापि न तान्त्रिकं प्रधानम् ॥

( चमसाधिकरणम् । )

चमसवदविशेषात् ॥ ८ ॥

श्वेताश्वतरे "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यत्र किमजाशब्देन तन्त्रसिद्धा प्रकृतिरभिधीयत उत श्रुतिसिद्धेति संशयः ॥ तन्त्रसिद्धेति पूर्वः पक्षः । "अजामेकाम्" इत्यस्या प्रकार्पितजनितेरेहीनां प्रजानां स्वातन्त्र्येण कारणत्वश्रवणात् ॥ सिद्धान्तस्तु—न तन्त्रसिद्धायाः प्रकृतेरत्र ग्रहणम् । जननविरहश्रवणमात्रेण तन्त्रसिद्धायाः(२) प्रतीतिनियमाभावात् । न हि यौगिकानां शब्दानामर्थप्रकरणादिभिर्विशेषप्रत्यायकैर्विना विशेष एवेति नियमसंभवः(३) । न चास्याः स्वातन्त्र्येण सृष्टिहेतुत्वोपि प्रती-

(१) 'परमपुरुषो' मु० ग०  (२) 'सिद्धायाः प्रकृते.' मु०
(३) 'नियमसम्भवः' ग०

तम्। अपि तु सृष्टिहेतुत्वमात्रम्। तद्ब्रह्मात्मिकायाश्च न विरुद्धम्। अत्र तु ब्रह्मात्मिकाया एव शाखान्तरसिद्धाया एतत्स्वरूपमन्त्रोदितायाः प्रत्यभिज्ञानात्सैवेति निश्चीयते ॥ सूत्रार्थस्तु—नायमजाशब्दस्तन्त्रसिद्धप्रधानविषयः। कुतः। चमसवदविशेषात्। "अर्वाग्बिलश्चमसः" इति मन्त्रे भक्षण(१)साधनत्वयोगेन प्रवृत्तस्य चमसशब्दस्य शिरसि वृत्तौ "यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमसः" इति वाक्यशेषे विशेषो दृश्यते तथा "अजामेकाम्" इत्यजाशब्दस्य तन्त्रसिद्धप्रधाने प्रवृत्तौ विशेषाभावान्न तद्ग्रहणं न्याय्यम् ॥

अस्ति तु ब्रह्मात्मिकाया एव ग्रहणे विशेष इत्याह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

ज्योतिर्ब्रह्म यस्या उपक्रमः कारणं सा ज्योतिरुपक्रमा। तुशब्दोऽवधारणे। ब्रह्मकारणिकैवैषाऽजा। तथा ह्यधीयत एके। यथा रूपोऽयमजायाः प्रतिपादको मन्त्रस्तथारूपमेव मन्त्र ब्रह्मात्मिकायास्तस्याः प्रतिपादकमधीयत एके शाखिनः। "अणोरणीयान्महतो महीयान्" इत्यादिना ब्रह्म प्रतिपाद्य "सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तजिह्वाः, सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त, अतः समुद्रा गिरयश्च सर्वे" इत्यादिना ब्रह्मण उत्पन्नत्वेन ब्रह्मात्मकतया सर्वानुसंधानविधानसमये "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्" इति प्रतिपाद्यमाना ब्रह्मात्मिकैवेति तत्प्रत्यभिज्ञानादिहाप्यजा ब्रह्मात्मिकैवेति निश्चीयते ॥

---

(१) 'चमन' मु०

अजात्वं ज्योतिरुपक्रमात्वं च कथमुपपद्यत इत्यत आह—

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

कल्पना सृष्टिः । " सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् " इत्यादिदर्शनात् । " अस्मान्मायी सृजते विश्वमेतत् " इति हि सृष्टिरिहोपदिश्यते । प्रलयवेलायामेषा प्रकृतिः परमपुरुषाश्रया कारणावस्थाऽतिसूक्ष्मावयवा(१) शक्तिरूपेणावतिष्ठते । तदवस्थाऽभिप्रायेणास्या अजात्वम् । सृष्टिवेलायां पुनस्तच्छरीराद्ब्रह्मणः स्थूलावस्था जायते । तदवस्था ज्योतिरुपक्रमेति न कश्चिद्विरोधः । मध्वादिवत् यथादित्यस्यैकस्यैव कार्यावस्थायाम् "असौ वा आदित्यो देवमधु " इति वस्वादिभोग्यरसाधारतया मधुत्वं तस्यैव " अथ तत ऊर्ध्वमुदेता नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इत्यादिना नामरूपप्रहाणेन कारणावस्थायां सूक्ष्मस्यैकस्यैवावस्थानं न विरुध्यते तद्वत् ॥

( संख्योपसंग्रहाधिकरणम् । )

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

वाजसनेयके "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् " इत्यत्र किं सांख्योक्तानि पञ्चविंशतितत्त्वानि प्रतिपाद्यन्त उत नेति संशयः ॥ तान्येवेति पूर्वः पक्षः । "पञ्च पञ्चजनाः" इति पञ्चसंख्याविशिष्टाः पञ्चजनाः पञ्चविंशतिः संपद्यन्ते । कथम् । पञ्चजना इति

(१) ' अतिसूक्ष्मा ' ग०

समाहारविषयोऽयं समासः पञ्चपूल्य इतिवत् । पञ्चभिर्जनैरारब्धः समूहः पञ्चजनः । पञ्चजनीत्यर्थः । लिङ्गव्यत्ययश्छान्दसः । पञ्चजना इति बहुवचनात्समूहबहुत्वं चावगम्यते । ते च कतीत्यपेक्षायां पञ्च पञ्चजना इति पञ्चशब्दविशेषिताः पञ्चजनसमूहा इति पञ्चविंशतिस्तत्त्वानि भवन्ति। मोक्षाधिकारात्तान्त्रिकाण्येवेति निश्चीयन्ते । एवं निश्चिते सति " तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् " इति पञ्चविंशकमात्मानं ब्रह्मभूतं विद्वानमृतो भवतीति ॥ राद्धान्तस्तु—"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः " इति यच्छब्दनिर्दिष्टब्रह्माधारत्वादाधेयानां (१) तत्त्वानां ब्रह्मात्मकत्वमवगम्यते । यच्छब्दनिर्दिष्टं च " तमेव मन्य आत्मानम् " इति तच्छब्देन परामृश्य "ब्रह्मामृतोऽमृतम्" इति निर्देशाद्ब्रह्मेति निश्चीयते। अतो न तान्त्रिकप्रसङ्गः॥ सूत्रार्थस्तु—" पञ्च पञ्चजनाः "इत्यत्र पञ्चविंशतिसंख्योपसंग्रहणादपि न तान्त्रिकाणीमानि तत्त्वानि। यस्मिन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तान्त्रिकेभ्यो नानाभावादेषां तत्त्वानां पृथग्भावादित्यर्थः । अतिरेकाच्च तान्त्रिकेभ्यस्तत्त्वातिरेकप्रतीतेश्च । यस्मिन्निति निर्दिष्टमतिरिक्तमाकाशश्च । न संख्योपसंग्रहादपीत्यपिशब्देन संख्योपसंग्रहो न भवतीत्याह । आकाशस्य पृथङ्निर्देशात् । अतः पञ्चजना इति न समाहारविषयः समासः । " दिक्संख्ये संज्ञायाम्" इति संज्ञाविषयः । पञ्चजनसंज्ञिताः केचित्ते च पञ्चैव " सप्त सप्तर्षयः " इतिवत् (२) ॥

---

(१) ' तदाधेयानाम् ' मु०

(२) ' यथा मरीचिरपि सप्तर्षिरत्रिश्च सप्तर्षिरिति प्रत्येकं सप्तर्षिसंज्ञिताः सप्त, एवं पञ्चजनसंज्ञिता अपि पञ्च सन्तीत्यर्थ —इति सम्प्रदायविदः

प्राणादयो वाक्यशेषात् ॥ १२ ॥

पञ्चजनसंज्ञिताः पञ्च पदार्थाः प्राणादय इति वाक्यशेषादवगम्यते "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति महात्मकानीन्द्रियाणि "पञ्च पञ्चजनाः" इति निर्दिष्टानि। जननाच्च जनाः ॥

काण्वपाठेऽन्नवर्जितानां चतुर्णां निर्देश(१)पञ्चजनसंज्ञितानीन्द्रियाणीति कथं ज्ञायते इत्यत आह—

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानां वाक्यशेषे असत्यन्नशब्दे वाक्योपक्रमगतेन "तं देवा ज्योतिषां ज्योतिः" इति ज्योतिःशब्देन पञ्चजना इन्द्रियाणीति विज्ञायते। कथम्।(२) ज्योतिषां ज्योतिरिति ब्रह्मणि निर्दिष्टे प्रकाशकानां प्रकाशकं ब्रह्मेति प्रतीयते। के ते प्रकाशका इत्यपेक्षायां पञ्च पञ्चजना इति अनिर्ज्ञातविशेषाः पञ्चसंख्याताः प्रकाशका(३)पञ्चेन्द्रियाणीत्यवगम्यते। अतो "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इतीन्द्रियाणि भूतानि च ब्रह्मणि प्रतिष्ठितानीति न तान्त्रिकत्वगन्धः ॥

( कारणत्वाधिकरणम्। )

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

जगत्कारणवादीनि वेदान्तवाक्यानि किं प्रधानकारण-

(१) 'निर्देशात्' मु० ग०
(२) 'कथम्' इति क० पुस्तके नास्ति।
(३) 'प्रकाशकानि' मु० ग०

वादैकान्तानि उत ब्रह्मकारणवादैकान्तनीति संशयः ॥ प्रधानकारणवादैकान्तानीति पूर्वः पक्षः । " सदेव सोम्येदमग्र आसीत्" इति कचित्सत्पूर्विकासृष्टिराम्नायते, अन्यत्र " असदेव सोम्येदमग्र आसीत् " तथा "असद्वा इदमग्र आसीत् " तथा " तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते" इति । अव्याकृतं हि प्रधानम् । अतः प्रधानकारणवादनिश्चयात्तदेकान्तान्येव ॥ राद्धान्तस्तु—" सत्यं ज्ञानमनन्तं ब्रह्म " इत्युपक्रम्य " तस्माद्वा एतस्मादात्मन आकाशः सभूतः । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत " इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्तस्यैव ब्रह्मणः कारणावस्थायां नामरूपविभागासंबन्धितया सद्भावाभावादसदव्याकृतादिशब्देन व्यपदेश इति ब्रह्मकारणवादैकान्तान्येव॥ सूत्रार्थस्तु आकाशादिपदचिन्हितेषु "तस्माद्वा एतस्मादात्मन आकाशः सभूतः " इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात् (१) सर्वेषु सृष्टिवाक्येषु यथाव्यपदिष्टस्यैव कारणत्वेनोक्तेः ब्रह्मकारणवादैकान्तानि । यथाव्यपदिष्टं सार्वज्ञ्यादियुक्ततयाऽस्माभिर्व्यपदिष्टम् ॥

तथा सति "असद्वा इदमग्र आसीत्"इति किं ब्रवीतीत्यत आह ॥

समाकर्षात् ॥ १५ ॥

" सोऽकामयत बहु स्यां प्रजायेय" इति बहुभवनसंकल्पपूर्वकं जगत्सृजतो ब्रह्मणः सर्वज्ञस्य "असद्वा इदमग्र आसीत् "

(१) ' सर्वज्ञस्ये ' त्यादि 'प्रतिपादनात्' इत्यन्तो ग्रन्थो ग० पुस्तके नास्ति ।

इत्यत्रापि समाकर्षात्कारणावस्थायां नामरूपसंबन्धित्वाभावेनासदिति ब्रवीति। एवं "तद्धेदं तर्ह्यव्याकृतम्" इत्यादिषु "स एष इहानुप्रविष्ट आनखाग्रेभ्यः। पश्यत्पचक्षुः" इत्यादिपूर्वापरपर्यालोचनया तत्र तत्र सर्वशब्दस्य समाकर्षो द्रष्टव्यः॥

( जगद्वाचित्वाधिकरणम्। )

जगद्वाचित्वात् ॥ १६ ॥

कौषीतकीनां बालाक्यजातशत्रुसंवादे (१)"ब्रह्म ते ब्रवाणि" इत्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः" इत्यत्र वेदितव्यतयोपादिष्टः किं सांख्यतन्त्रप्रसिद्धः पुरुष उत परमात्मेति संशयः॥ पुरुष एव प्रकृतिवियुक्त इति पूर्वः पक्षः। "यस्य चैतत्कर्म" इति पुण्यपापरूपकर्मसंबन्धितयोपलक्षितत्वात्॥ राद्धान्तस्तु-"यस्य चैतत्कर्म" इति कर्मशब्दस्य क्रियत इति व्युत्पत्त्या जगद्वाचित्वात्कृत्स्नं जगद्यस्य कार्यं स परमपुरुष एव वेदितव्यतयोपदिष्टो भवतीति॥ सूत्रमपि व्याख्यातम्॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥१७॥

"एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते" इत्यादिभोक्तृत्वरूपजीवलिङ्गात् "अथास्मिन्प्राण एवैकधा भवति" इति मुख्यप्राणलिङ्गाच्च नायं परमात्मेति चेत्तस्य परिहारः प्रतर्दनविद्यायामेव व्याख्यातः। प्रकरणपूर्वापरपर्यालोचनया परमात्मपरं(२) वाक्यमिति निश्चिते सत्यन्यलिङ्गानि तदनुगुणतया नेतव्यानीत्यर्थः॥

---

(१) 'बालाक्यजातशत्रुसंवादे' इत्ययमंशः क० मु० पुस्तकयोर्नास्ति।

(२) 'परमिदं' मु०

"तौ ह सुप्तं पुरुषमाजग्मतुः" इति प्राणादि(१)नामभिराम-न्त्रणाश्रवणयष्टिघातोत्थापनादिना शरीरेन्द्रियप्राणा(२)ति-रिक्तजीवात्मसद्भावप्रतिपादनपरमिदं वाक्यमित्यवगम्यत इत्यत उत्तरं पठति—

अन्यार्थं तु जैमिनिः प्रश्नप्रतिवचनाभ्याम-
पि चैवमेके ॥ १८ ॥

तुशब्दः शङ्काव्यावृत्त्यर्थः । जीवसंकीर्तनमन्यार्थं जी-वातिरिक्तब्रह्मसद्भावप्रतिबोधनार्थमिति प्रश्नप्रतिवचनाभ्याम-वगम्यते । प्रश्नस्तावज्जीवप्रतिपादनानन्तरं(३) "क्वैष एतद्बा-लाके पुरुषोऽशयिष्ट" इत्यादिकः सुप्तजीवाश्रयविषयतया परमा-त्मपर इति निश्चितः । प्रतिवचनमपि "अथास्मिन्प्राण एवै-कधा भवति" इत्यादिकं परमात्मविषयमेव । सुप्तपुरुषाश्रयतया प्राणशब्दनिर्दिष्टः परमात्मैव "सता सोम्य तदा संपन्नो भ-वति" इत्यादिभ्यः । जैमिनिग्रहणमुक्तस्यार्थस्य पूज्यत्वा-य । अपि चैवमेके वाजसनेयिन इदमेव बालाकिअजातशत्रुसंवाद-गतप्रश्नप्रतिवचनरूपं वाक्यं परमात्मविषयं स्पष्टमधीयते "क्वैष एतत्" इत्यादि "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छे-ते" इत्यन्तम् (४) ॥

( वाक्यान्वयाधिकरणम् । )

वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके मैत्रेयीब्राह्मणे "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय" इत्यारभ्य "आ-

(१) 'प्राण' मु०
(२) 'प्राणाद्य' मु०
(३) 'पादनादुपरिष्टात्' ग०
(४) 'इत्येतदन्तम्' मु०

त्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादौ द्रष्टव्यतया निर्दिष्टः पुरुषस्तन्त्रसिद्ध उत परमात्मेति संशयः ॥ तन्त्रसिद्धः पञ्चविंशक एवेति पूर्वः पक्षः । पतिजायापुत्रवित्तमित्रपश्वादिभियसंबन्ध्यात्मा न परमात्मा भवितुमर्हति । स एव "आत्मा वा अरे द्रष्टव्यः" इति प्रतिपाद्यते ॥ राद्धान्तस्तु—न पत्यदीनां कामाय पत्यादयः प्रिया भवन्ति "आत्मनस्तु कामाय" इत्युक्त्वा "आत्मा वा अरे द्रष्टव्यः" इति निर्दिष्ट आत्मा जीवातिरिक्तः सत्यसंकल्पः सर्वज्ञः परमात्मैव । यत्संकल्पायत्तं पत्यादीनां स्वसंबन्धिनः प्रति प्रियत्वं स हि सत्यसंकल्पः परमात्मा (१) । आत्मज्ञानेन सर्वज्ञानादयोऽपि वक्ष्यमाणाः परमात्मन्येव संभवन्ति ॥ सूत्रार्थस्तु—वाक्यस्य कृत्स्नस्य परमात्मन्येवान्वयाद्द्रष्टव्यतया निर्दिष्ट आत्मा परमात्मैव । "अमृतत्वस्य तु नाशास्ति वित्तेन । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् । इदं सर्वं यदयमात्मा । तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः । पुरुष एवेदम् (२) । येनेदं सर्वं विजानाति तं केन विजानीयात्" इति हि कृत्स्नस्य वाक्यस्य परमात्मन्यन्वयो दृश्यते ॥

"एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति जीवलिङ्गस्य मतान्तरेण निर्वाहमाह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य परमात्म-

(१) 'यत्संकल्पायत्तम्' इत्यादिवाक्यं ग० पुस्तके नास्ति ।
(२) 'पुरुष एवेदम्' इति ग० पुस्तक एवास्ति ।

कार्यत्वेन परमात्मनोऽनन्यो जीव इति जीवशब्देन परमात्मनोऽभिधानमित्याश्मरथ्यमतम् ॥

उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २१ ॥

" परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " इति शरीरादुत्क्रमिष्यतो जीवस्य (१) परब्रह्म(२)भावाज्जीवशब्देन परमात्माभिधानमित्यौडुलोमिराचार्यो मेने ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

" य आत्मनि तिष्ठन् " इत्यादिभिर्जीवात्मन्यात्मतया(३) परमात्मनोऽवस्थितेर्जीवात्मशब्दस्य परमात्मनि पर्यवसानाज्जीवात्मशब्देन परमात्मनोऽभिधानमिति काशकृत्स्न आचार्यो मन्यते । इदमेव सूत्रकारमतमित्यवगम्यते । त्रयाणामन्योन्यविरोधात् । इतः परमवचनाच्च ॥

( प्रकृत्यधिकरणम् । )

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात् ॥ २३ ॥

परं ब्रह्म किं जगतो निमित्तकारणमात्रमुतोपादानकारणमपीति संशयः ॥ निमित्तमात्रमिति पूर्वः पक्षः । मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनात् । " अस्मान्मायी सृजते " इत्यादिभिर्भेदप्रतिपादनात् । ब्रह्मणोऽविकारित्वश्रुतिविरोधाच्च ॥ राद्धान्तस्तु—" येनाश्रुत श्रुतम् " इति ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञानात्(४) "यथा सोम्यैकेन मृत्पिण्डेन" इति मृत्तत्कार्यदृ-

---

(१) ' मुक्तजीवस्य ' क०
(२) ' परमात्म ' मु०
(३) ' आत्मन ' ग०
(४) ' प्रतिज्ञान्यथाऽनुपपत्त्या ' मु०

दृष्टान्तेन तदुपपादनाच्च जगदुपादानकारणमपि ब्रह्मैवेति विज्ञायते । प्रमाणान्तरावसितसकलवस्तुविलक्षणस्य शास्त्रैकसमधिगम्यस्य परब्रह्मणः सर्वज्ञस्य सर्वशक्तेः कार्यकारणोभयावस्थायामपि स्वशरीरभूतचिदचित्प्रकारतयाऽवस्थितस्यैकस्यैव निमित्तत्वमुपादानत्वं चाविरुद्धम् । शरीरभूतचिद्वस्तुगतो विकार(१) इति कार्यावस्थस्यापि शरीरिणः परमात्मनोऽविकारित्वं स्थितमेव । चिदचिद्वस्तुशरीरस्य ब्रह्मण एवोपादानत्वेऽपि ब्रह्मण्यपुरुषार्थविकाराऽस्पर्शप्रदर्शनाय हि "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" इति व्यपदेशः ॥ प्रतिज्ञादृष्टान्तानुरोधादुपादानं च ब्रह्मैवेति सूत्रार्थः ॥

अभिध्योपदेशाच्च ॥ २४ ॥

"सोऽकामयत बहुस्याम् । तदैक्षत (२) बहुस्यां प्रजायेय" इति स्रष्टुर्ब्रह्मणः स्वस्यैव जगदाकारेण बहुभवनचिन्तनोपदेशाच्च जगदुपादानं निमित्तं च ब्रह्मैवेति निश्चीयते ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

"किं स्विद्वनं क उ स वृक्ष आसीत्" इत्यादिना जगदुपादाननिमित्तादौ पृष्टे "ब्रह्म वनं (३) ब्रह्म स वृक्ष आसीत्-ब्रह्माध्यातिष्ठत्" इत्युपादानं निमित्तं चोभयं ब्रह्मैवेति हि साक्षादाम्नायते । अतश्चोभयं ब्रह्म ॥

आत्मकृतेः ॥ २६ ॥

---

(१) 'भूतचिदचिद्वस्तुगता विकाराः' ग० पा०

(२) 'सोऽकामयत बहुस्यां प्रजायेय इति' ग०

(३) 'ब्रह्म वनम्' इति ग० पुस्तके नास्ति ।

"तदात्मानं स्वयमकुरुत" इति सद्गुरात्मन एव जगदाकारेण कृतिरुपादिश्यते। अतश्चोभयम्। नामरूपभावाभावाभ्यामेकस्य कर्मकर्तृभावो न विरुद्ध्यते ॥

यद्यात्मानमेव ब्रह्म जगदाकारं करोति तर्हि ब्रह्मणोऽपहृतपाप्मत्वादिकमनवधिकातिशयानन्दस्वरूपत्वं सर्वज्ञत्वमित्यादि सर्वं विरुद्ध्येत। अज्ञत्वासुखित्वकर्मवश्यत्वादिविपरीतरूपत्वाज्जगतः—इत्यत उत्तरं पठति—

परिणामात् ॥ २७ ॥

अज्ञब्रह्मविवर्तवादे हि तद्भवत्येव। अज्ञानस्य तत्कार्यरूपानन्तापुरुषार्थस्य च वेदान्तजन्यज्ञाननिवर्त्यस्य ब्रह्मण्येवान्वयात्। तदा शास्त्रस्य भ्रान्तजल्पितत्वापाताच्च। अविभक्तनामरूपसूक्ष्मचिदचिद्वस्तुशरीरकस्य ब्रह्मणो विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरत्वेन परिणामो हि वेदान्तेपूपदिश्यते "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्येवमादिभिः। अपुरुषार्थाश्च विकाराश्च (१) शरीरभूतचिदचिद्वस्तुगताः। कारणावस्थायां कार्यावस्थायां चात्मभूतं ब्रह्मापहतपाप्मत्वादिगुणकमेव। स्थूलसूक्ष्मावस्थस्य कृत्स्नस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वं ब्रह्मणश्च तदात्मत्वं "यस्य (२) पृथिवी शरीरम्" इत्यारभ्य "यस्याव्यक्तं शरीरम्—यस्याक्षरं शरीरम्—यस्य मृत्युः शरीरम्—एष सर्वभूतान्तरात्माऽपहतपाप्मा" इत्येवमादिश्रुतिशतसमधिगतम्। अतः सर्वमनवद्यम् ॥

---

(१) 'अपुरुषार्थविकाराश्च' ग० 'अपुरुषार्थाश्च विकारा.' म०

योनिश्च हि गीयते ॥ २८ ॥

" यद्भूतयोनिं परिपश्यन्ति धीराः। कर्तारमीशं पुरुषं ब्रह्मयोनिम् " इत्यादिषु सर्वस्य भूतजातस्य परमपुरुषो योनित्वेन गीयते । हि हेतौ । यस्माद्योनिरिति गीयते तस्माच्चोपादानमपि ब्रह्म । योनिशब्दश्चोपादानकारणपर्यायः ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

" यतो वा इमानि " इत्यादिषूदाहृतेषु वाक्येषु " जन्माद्यस्य यतः" इत्यादिनोक्तेन न्यायकलापेन सर्वे वेदान्ता ब्रह्मपरा व्याख्याताः । पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य चतुर्थः पादः । समाप्तश्चायं समन्वयाध्यायः ॥

---

# वेदान्तदीपे

## द्वितीयोऽध्यायः ।

( स्मृत्यधिकरणम् । )

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

वेदान्तानां समस्तचिदचिद्विलक्षणास्पृष्टहेयगन्धसर्वज्ञता(१)ऽऽद्यनन्तकल्याणगुणाकरब्रह्मैकपरत्वं प्रतिपादितं कापिलादि(२)स्मृतिविरोधेन चालयितुं शक्यमुत नेति संशयः ॥ शक्यमिति पूर्वः पक्षः । श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वे स्थितेऽपि वेदान्तवेद्यार्थस्य दुर्ग्रहत्वेनाल्पश्रुतैर्मन्दमतिभिराप्तप्रणीतस्मृत्युपबृंहणेन विना निश्चयो नोपपद्यते । कापिल(३)स्मृतिः केवलतत्त्वपरेति तयैव ह्युपबृंहणं न्याय्यम् । अन्यथाऽऽप्तप्रणीतायाः केवलतत्त्वपरायास्तस्या अनवकाशप्रसङ्ग इति वेदान्तवेद्यं जगत्कारणं प्रधानम् ॥ राद्धान्तस्तु—वेदान्तस्योपबृंहणापेक्षत्वेऽपि आप्ततममन्वादिस्मृतिभिर्वेदान्ताविरोधिनीभिरेवोपबृंहणं न्याय्यम् । अन्यथा तासां बह्वीनामनवकाशप्रसङ्गो महानयं दोषः स्यात् । न च तासां धर्मप्रतिपादनांशोपबृंहणत्वेन सावकाशत्वम् । यतो धर्माणामपि

---

(१) ' सार्वज्ञ्या ' क०
(२) ' कापिल ' मु०
(३) ' कपिलादि ' ग०

स्वरूपं परब्रह्म(१)भूतपरमपुरुषाराधनत्वं "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत " इत्यादिभिः ॥ सूत्रमपि व्याख्यातम् ॥

अतीन्द्रियार्थसाक्षात्कारसमर्थस्य कापिलस्य वेदान्तानां परब्रह्मपरत्वानुपलब्धेः प्रधानपरत्वमाश्रयणीयमित्यत उत्तरम्(२)—

इतरेषां चानुपलब्धेः ॥ २ ॥

इतरेषां मन्वादीनां वेदविदग्रेसराणां सर्वार्थ(३)साक्षात्कारसमर्थानां प्रधानपरत्वानुपलब्धेर्ब्रह्मपरत्वमेवाश्रयणीयम् । वेदान्तप्रतिपन्नार्थविरुद्धायास्तु कापिलोपलब्धेर्भ्रान्तिमूलत्वं कल्पयितव्यम् ॥

( योगप्रत्युक्त्यधिकरणम् । )

एतेन योगः प्रत्युक्तः ॥ ३ ॥

किं वेदान्तानां योगस्मृत्योपबृंहणं न्याय्यमुत नेति संशयः ॥ न्याय्यमिति पूर्वः पक्षः । कृत्स्नवेदप्रवर्तनाधिकृतहिरण्यगर्भप्रणीतत्वाद्योगस्य । ईश्वरसद्भावाभ्युपगमाच्च । अतो योगस्मृत्युपबृंहितत्वेन वेदान्तानां प्रधानो(४)पादानप्रतिपादनपरत्वम् ॥ राद्धान्तस्तु—कापिलस्मृतिवद्वेदविरुद्धत्वाविशेषादनादरः(५)। हिरण्यगर्भस्यापि क्षेत्रज्ञत्वेन भ्रमसंभवाद्योगस्मृतेरपि भ्रान्तिमूलत्वम् ॥ सूत्रमपि व्याख्यातम् ॥

---

(१) 'स्वरूपब्रह्म' मु० (२) 'उत्तरं पठति' मु०

(३) 'सर्वातीन्द्रियार्थ' मु०

(४) 'अब्रह्मात्मकप्रधानो' मु०

(५) 'दरणीयैव योगस्मृतिः' मु०

( विलक्षणत्वाधिकरणम् । )

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

किं वेदान्तानां जगत्कारणतया प्रधानपरत्वमुत ब्रह्मपरत्वमिति संशयः ॥ प्रधानपरत्वमिति पूर्वः पक्षः । अज्ञत्वादिना जगतो ब्रह्मविलक्षणत्वेन ब्रह्मकार्यत्वप्रतिपादनासंभवात् । सालक्षण्येन प्रधान(१)प्रतिपादनपरत्वस्य च संभवात् ॥ राद्धान्तस्तु—माक्षिकादिभ्यः क्रिम्यादीनां विलक्षणानामुत्पत्तिदर्शनाद्ब्रह्मविलक्षणस्य जगतस्तत्कार्यत्वं संभवत्येवेति ॥ सूत्रार्थस्तु—अज्ञत्वेनासुखित्वेन चोपलब्धस्य चिदचिन्मिश्रस्य जगतः सर्वज्ञाद्द्वयप्रत्यनीकान्निरतिशयानन्दाद्ब्रह्मणो विलक्षणत्वेन जगतो ब्रह्मकार्यत्वप्रतिपादनं वेदान्तानां न संभवति । तथात्वं विलक्षणत्वं च शब्दादवगम्यते । न केवलं प्रत्यक्षाद्युपलब्ध्या " विज्ञानं चाविज्ञानं च । अनीशया शोचति मुह्यमानः । अनीशश्चात्मा बध्यते भोक्तृभावात् " इत्यादेः ॥

"आपो वा अकामयन्त । तं पृथिव्यब्रवीत्" इत्यादौ पृथिव्यादेरपि ज्ञानकार्यत्वं व्यपदिश्यते । तस्मात् "अविज्ञानं च" इति तदन्यपरमित्यत उत्तरम्—

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्दश्चोद्यं व्यावर्तयति । पृथिव्याद्यभिमानिदेवतानामयं व्यपदेशः । कुतोऽवगम्यते । विशेषानुगतिभ्यां विशेषण विशेषः " हन्ताहमिमास्तिस्रो देवताः " इति पृथिव्यादेर्देवताशब्देन विशेषण दृश्यते । " सर्वा ह वै देवता

(१) ' प्रधानकार्यत्व ' मु०

श्रहंश्रेयसे विवदमानाः" इति वागादिप्राणपर्यन्तस्य च । अनुगतिरनुप्रवेशः । अग्न्यादित्यादेर्वागादिष्वनुप्रवेशो दृश्यते । "अग्निर्वाग्भूत्वा मुखं प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्यादौ ॥

दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । माक्षिकादिभ्यो विलक्षणानां क्रिम्यादीनामुत्पत्तिर्दृश्यते । अतो ब्रह्मविलक्षणस्यापि जगतस्तत्कार्यत्वं संभवति ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

यदि कार्यस्य कारणाद्विलक्षणद्रव्यत्वमभ्युपगम्यते तर्हि कारणे कार्यमसद्भवतीत्यसत्कार्यवादोऽभ्युपगतः स्यात्, तथा सति "सर्वं खल्विदं ब्रह्म" इत्यादि सामानाधिकरण्यव्यपदेशो न घटत इति चेन्न । कार्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रत्वात् । अस्माभिः पूर्वमभिहितं(१) कार्यकारणयोरेकद्रव्यत्वं स्वीकृतमेव । एकमेव (२) कारणावस्थं द्रव्यं कार्यावस्थां भजमानं सलक्षणावस्थामपि भजते विलक्षणावस्थामपीत्यर्थः ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

यदि ब्रह्मैव सर्वज्ञं सत्यसंकल्पं निरतिशयानन्दमपहतपाप्मत्वादिस्वरूपं तद्विपरीतजगदवस्थां भजते तर्हि पिण्डत्वघटत्वावस्थमृद्द्रव्यवदसर्वज्ञत्वमनपहत(३)पाप्मत्वादिकं कर्म-

(१) 'मात्रत्वादस्माभिः पूर्वमभिहितस्य ।' मु०

(२) 'एकमेव' इति ग० पुस्तके नास्ति ।

(३) 'वत्सर्वज्ञत्वमपहत' मु० ग०

वश्यत्वं ब्रह्मणः प्रसज्यतेति विरुद्धार्थाभिधानाद्वेदान्तवाक्यमसमञ्जसं स्यात् । अपीताविति सृष्ट्यादेः (१) प्रदर्शनार्थम् । जगतो ब्रह्मण्यपीतौ ब्रह्मण उत्पत्तावपीत्यर्थः । अपीतिरप्ययः ॥

## न तु दृष्टान्तभावात् ॥ ९ ॥

न ब्रह्मण्यज्ञत्वादयः प्रसज्येरन् । अत एव न वेदान्तानामसामञ्जस्यम् । तुशब्दः प्रसक्तस्यासम्भावनीयतां द्योतयति । एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थायां दृष्टान्तसद्भावात् । यथा मनुष्यो जातो बालो युवा स्थविरो भवतीत्यत्र मनुष्यशरीरकस्य चेतनस्यैव सर्वावस्थान्वयेऽपि जन्मबालत्वयुवत्वस्थविरत्वादीनि नात्मनि सङ्गच्छन्ते, तथाज्ञानसुखादयश्च न शरीरे, एवं चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणोभयावस्थान्वयेऽपि कर्मवश्यत्वाज्ञत्वादयः शरीरभूतचिदचिद्वस्तुगताः । अपहतपाप्मत्वसर्वज्ञत्वादयः परमात्मन्यात्मभूतेऽवतिष्ठन्ते । सर्वावस्थस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वं ब्रह्मणश्च तदात्मत्वं " यस्य पृथिवी शरीरं " इत्याद्यन्तर्यामिब्राह्मणादिष्ववगतमिति न कश्चिद्विरोधः ॥

## स्वपक्षदोषाच्च ॥ १० ॥

न केवलं ब्रह्मकारणवादस्य निर्दोषतया तत्समाश्रयणम् । प्रधानकारणवादे दोषाच्च तं परित्यज्य स एव समाश्रयणीयः । प्रधानकारणवादे हि निर्विकारस्य चिन्मात्रस्य पुरुषस्य प्रकृतिसंनिधानकृततद्धर्माध्यासमूला जगत्प्रवृत्तिरभ्युपगम्यते । तत्र प्रकृतिसद्भावमात्रे संनिधाने सति

(१) ' सृष्ट्यादे- । ' इति मुद्रिते नास्ति ।

मुक्तस्यापि तद्धर्माध्यासमसङ्गः । विकारविशेषे सति संनिधाने कृत्स्नस्य विकारस्याध्यासपूर्वकत्वान्नाध्यासस्य (१) विकारो हेतुरिति विरुद्धार्थाभिधानादसामञ्जस्यादिदोष इति न तत्पक्षसंभवगन्धः ॥

तर्काप्रतिष्ठानादपि ॥ ११ ॥

कपिलतन्त्रस्य तर्कमूलत्वेन शाक्या(२)दितर्कप्रतिहतलयाऽस्य तर्कस्याप्रतिष्ठितत्वाच्च न तत्पक्षसंभवः ॥

अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ १२ ॥

इतः पूर्वं विद्यमानैस्तर्कैरप्रतिहतत्वं यथा संभवति तथा प्रधानकारणवादमनुमास्यामह (३) इति चेत्तथापि तर्काप्रतिष्ठानदोषादमोक्षो दुर्वारस्त्वदधिकतर्ककुशल(४)सद्भावसंभवात् ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

न परिगृह्यन्ते वैदिकैरित्यपरिग्रहाः(५) । एतेन तर्काप्रतिष्ठानलक्षणेन कपिलस्मृतिनिरसनहेतुना परिशिष्टाः कणभक्षादिस्मृतयोऽपि निरस्ता व्याख्याताः ॥ परमाणुकारणवादः स-

(१) 'पूर्वकत्वाभावान्नाध्यासस्य' इति 'पूर्वकत्वाभावान्न संनिधानं विकारहेतुरिति कृत्स्नस्य विकारस्याध्यासपूर्वकत्वान्नाध्यासस्य' इति च पाठान्तरे ।

(२) 'शाठ्या' क०

(३) 'अनुमन्यामहे' मु० (४) 'दूष्यत्व' पा०

(५) एतद्वाक्यानन्तरम् 'शिष्टाश्च ते अपरिग्रहाश्च शिष्टापरिग्रहाः ।' इत्यधिकं मुद्रिते ।

र्वसंमत इति न तेषां तर्कस्याप्रतिष्ठितत्वमित्यधिकाशङ्का । तर्कमूलत्वाविशेषात्परमाणूनां शून्यत्वाद्द्रव्यत्वादिविवादाच्च तर्कस्याप्रतिष्ठितत्वमेवेति परिहारः ॥

( भोक्त्रापत्त्यधिकरणम् । )

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

सर्वात्मभूतस्य परस्य ब्रह्मणः स्वशरीरभूताज्जीवान्निरतिशयानन्दैकस्वभावतया यो विभाग उक्तः स विभागः संभवति नेति संशयः ॥ न संभवतीति पूर्वः पक्षः । सर्वचिदचिद्वस्तुशरीरतया सशरीरत्वाद्ब्रह्मणः । सशरीरस्य च सुखदुःखयोर्भोक्तृत्वापत्तेः । तदापत्तिश्च "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रियौ स्पृशतः" इति श्रुतेः ॥ राद्धान्तस्तु—स्यादेव विभागो जीवात्परस्याकर्मवश्यतया । न हि शरीरप्रयुक्तः सुखदुःखयोगः (१) । अपि तु शास्त्रवश्यतया तदतिवृत्तिकृतः । "स एकधा भवति त्रिधा भवति(२)" इत्यादिनाऽवगतशरीरस्य मुक्तस्य सशरीरस्याप्यशास्त्रवश्यतया निरस्तनिखिलदुःखदर्शनात् । यथा लोके राजशासनवश्यानां सशरीराणां तच्छासनातिवृत्तिनिमित्तदुःखान्वयेऽपि राज्ञः सशरीरस्यापि प्रकारान्तरेण साधर्म्येऽपि स्वशासनावश्यतया न तदतिवृत्तिकृतदुःखान्वयः ॥ विभागो वैलक्षण्यम् (३) । सूत्रमपि व्याख्यातम् ॥

---

(१) ' सुखदु सभोग. ग०

(२) ' त्रिधा भवति ' इत्यश. क० ग० पुस्तकयोर्नास्ति ।

(३) ' विभागो वैलक्षण्यम् ' इति क० ग० पुस्तकयोर्नास्ति ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

किं ब्रह्मकार्यं जगद्ब्रह्मणोऽन्यदुतानन्यादिति संशयः ॥ अन्यदिति पूर्वः पक्षः। तथोपलब्धेः। न हि बुद्धिशब्दान्तरादयः कारणात्कार्यस्यानन्यत्वे कथं चिदुपपद्यन्ते। कारकव्यापारवैयर्थ्यं चानन्यत्वे। अतो वस्तुविरोधादनन्यत्वश्रुतयो लक्षणया नेयाः ॥ राद्धान्तस्तु—"वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो। सर्वं खल्विदं ब्रह्म तज्जलानिति। तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्यादिश्रुतिशतसिद्धं कार्यस्य जगतः कारणाद्ब्रह्मणोऽनन्यत्वम्। न चात्र वस्तुविरोधगन्धः। कारणीभूतमृदादिद्रव्यस्यैव पृथुबुध्नोदराद्यवस्थाऽन्तरापत्त्या बुद्धिशब्दान्तरादयोऽप्युपपद्यन्ते। तत एव कारकव्यापारार्थवत्त्वं च। एवं कारणस्यैव कार्यावस्थायामपि प्रत्यभिज्ञायमानस्यावस्थान्तरापत्त्यैव सर्वेषूपपन्नेष्वनुपलब्धद्रव्यान्तरकल्पना न सम्भवति। तस्माद्ब्रह्मकार्यं जगद्ब्रह्मणोऽनन्यदेव ॥ सूत्रार्थस्तु—तस्माद्ब्रह्मणोऽनन्यत्वं कार्यस्य जगत आरम्भणशब्दादिभ्यो वाक्येभ्यस्तदुपपादयद्भ्य उपपद्यते (१)। "वाचाऽऽरम्भणम्" इति (२) शब्द आदिर्येषां पूर्वोक्तानां वाक्यानां तान्यारम्भणशब्दादीनि। तानि ह्यनन्यत्वमुपपादयन्ति ॥

---

(१) 'अवगम्यते' मु०
(२) 'आरम्भणमिति' मु०

भावे चोपलब्धेः ॥ १६ ॥

घटादिकार्यभावे च तदेवेदं मृद्द्रव्यमित्थमवस्थितमिति कारणस्योपलब्धेश्च कारणादनन्यत्वं कार्यस्य। यथा देवदत्तस्य बालत्वयुवत्वावस्थाविशिष्टस्यानन्यत्वम् ॥

सत्वाच्चापरस्य ॥ १७ ॥

अपरस्य कार्यस्य कारणे सत्वाच्च कारणादनन्यत्कार्यम्। सर्वमिदं घटशरावादि कार्यं पूर्वाह्णे मृदेवासीदिति हि कारणे कार्यमुपलभ्यते । घटशरावादिसंस्थानसंस्थितमेव मृद्द्रव्यं पूर्वकाले पिण्डाकारमुपलब्धमित्यर्थः ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषायुक्तेः शब्दान्तराच्च ॥ १८ ॥

" असदेवेदमग्र आसीत्। इदं वा अग्रे नैव किं चनासीत् (१) " इत्यादिषु कारणावस्थायां कार्यस्यासत्त्वव्यपदेशात्कारणे कार्यं सदित्येतन्नोपपद्यत इति चेत्तन्न । सदिति व्यपदेशहेतुभूतनामरूपावस्थाविरोधिसूक्ष्मावस्थाख्यधर्मान्तरेण योगादसदिति व्यपदिश्यते । कथमिदमवगम्यते। वाक्यशेषायुक्तेः शब्दान्तराच्च । वाक्यशेषस्तावत् " तदसदेव सन्मनोऽकुरुत स्याम् " इत्यसदिति व्यपदिष्टस्यैव मनस्कारप्रतिपादनेनासद्व्यपदेशो धर्मान्तरयोगनिमित्तमित्यवगमयति । युक्तिश्च धर्मान्तरयोगमेवासद्व्यपदेशहेतुमवगमयति । घटोऽस्ति घटो नास्तीति सदसद्व्यपदेशयोर्घटत्वकपालत्वयोः परस्परविरोधिधर्मयोरेव हेतुत्वे सिद्धे

(१) ' इदं वा अग्रे ' इत्यादिश्रुतः ग० पुस्तके नास्ति ।

तदतिरिक्तानुपलब्धतुच्छत्वस्य हेतुत्वकल्पनानुपपत्तेः। तथा शब्दान्तरं च "सदेव सोम्येदमग्र आसीत्" इति समानप्रकरणस्थमसच्छब्दं(१) धर्मान्तरयोगनिमित्तमवगमयति॥

पटवच्च॥ १९॥

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं(२) भजन्ते तद्वद्ब्रह्मापि॥

यथा च प्राणादिः॥ २०॥

यथा च वायुरेक एव शरीरवृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते तद्वद्ब्रह्मापीति तदनन्यत्वं च जगतः सिद्धम्॥

(इतरव्यपदेशाधिकरणम्।)

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥ २१॥

ब्रह्मणो जगत्कारणत्वं संभवत्युत नेति संशयः॥ न संभवतीति पूर्वः पक्षः। कुतः। "अयमात्मा ब्रह्म। तत्त्वमसि" इति तत्सामानाधिकरण्येन जीवो ब्रह्मैवेत्यवगमाज्जगत्सर्गस्य च जीवपुण्य(३)हेतुत्वादात्माहिताकरणाहितकरणादि(४)दोषप्रसक्तेः सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मणो जगत्कारणत्वानुपपत्तेः। जीवपरयोर्भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं व-

(१) 'स्थं सच्छब्दं' पा०
(२) 'नामरूपाभ्यां कार्यान्तरादिकं' मु० 'नामरूपकार्यान्तरं' क०
(३) 'जीवदुःख' मु० क०
(४) 'आत्माहिताकरणादि' मु०

देता स्वयैव परित्यक्ताः । भेदे सत्यनन्यत्वासिद्धेः । औपाधिकभेदविषया भेदश्रुतयः स्वाभाविकाभेदविषया अभेदश्रुतय इति चेत्तत्रेदं वक्तव्यम् । स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति न वा । न जानाति(१) चेत्सर्वज्ञत्वहानिः । जानाति(१) चेत्स्वस्मादभिन्नजीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणो हिताकरणाहितकरणादि(२)दोषप्रसक्तिरनिवार्या । जीवब्रह्मणोरज्ञानकृतो भेदस्तद्विषया भेदश्रुतय इति चेत्तत्रापि जीवाज्ञानपक्षे पूर्वोक्तविकल्प(३)स्तत्फलं च तदवस्थमेव । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृता जगत्सृष्टिश्च न संभवतीति । अज्ञानेन प्रकाशस्तिरोहितश्चेत्तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादयो दोषा भाष्ये प्रपञ्चिताः ॥ राद्धान्तस्तु—" अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो " मायया संनिरुद्धः । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । प्रधानक्षेत्रज्ञपतिर्गुणेशः । पृथगात्मानं प्रेरितारं च मत्वा " इत्यादिभिः प्रत्यगात्मनोऽर्थान्तरभूतं ब्रह्मेत्यवगमाज्जीवकर्मानुगुण(४)जगत्सर्गस्य च ब्रह्मणो लीलाप्रयोजनत्वाज्जगत्कारणत्वं संभवत्येव । तत्त्वमस्यादिसामानाधिकरण्यनिर्देशो " यस्यात्मा शरीरम् " इत्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वाच्छरीरतया जीवप्रकारक(५)ब्रह्मप्रतिपादनपरः । सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणावस्थं स्थूलचिदचिद्वस्तुशरीरं ब्रह्मैव कार्यावस्थमिति

(१) 'जानातीति' क०
(२) 'हिताकरणादि' ग०
(३) '...दोष' ग०
(४) 'गुणतया' मु०

कार्यकारणयोरनन्यत्वम् । एवमपि शरीरभूतयोश्चिदचिद्वस्तुनोः शरीरिणो ब्रह्मणश्च दुःखित्वपरिणामित्वहेयप्रत्यनीकत्वकल्याणगुणाकरत्वस्वभावाः स्वरूपविवेकविषयश्रुति(१)सिद्धास्तथैव व्यवस्थिता इति ब्रह्मणो जगत्कारणत्वं समञ्जस्येव ॥ सूत्रार्थस्तु—इतरो जीवः । ब्रह्मणो जीवतया व्यपदेशाज्जीवस्य च दुःखित्वादिहितरूपजगदकरणमहितरूपजगत्करणमित्यादिदोषप्रसक्तिर्ब्रह्मणः । अतो जगत्कारणत्वं न संभवतीति ॥

अत उत्तरं पठति (२)—

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म । कुतः । भेदनिर्देशात् । "स कारणं करणाधिपाधिपः । प्रधानक्षेत्रज्ञपतिर्गुणेशः । पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिभिः प्रत्यगात्मनो जीवाद्ब्रह्मणो हि भेदो निर्दिश्यते ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अश्मकाष्ठलोष्ठतृणादेरचेतनस्येवानन्त(३)दुःखाकरजीवस्य निरतिशयानन्दसत्यसंकल्पब्रह्मभावानुपपत्तिश्च । न केवलं भेदश्रुत्याऽर्थान्तरत्वमवगम्यते । वस्त्वनुपपत्त्या चेत्यर्थः(४) ॥ जीवसामानाधिकरण्यनिर्देशो "यस्यात्मा शरीरम्" इत्यादिश्रुतिसिद्धजीवप्रकारब्रह्मप्रतिपादनपर इति "अवस्थितेरिति काशकृत्स्नः" इत्यत्रैव प्रतिपादितः ॥

---

(१) 'विषया श्रुतिः' पा०

(२) इयमवतारिका मुद्रित एव वर्तते ।

(३) 'तृणादेरिवानन्त' पा०

(४) 'वस्तुतोऽभेदानुपपत्त्या चेति चकारार्थः ।' पा०

( उपसंहारदर्शनाधिकरणम् । )

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ब्रह्मणो जगत्कारणत्वं संभवति नेति (१) संशयः ॥ न संभवतीति पूर्वः पक्षः । कुतः । लोके कार्यजननसमर्थस्यापि वस्तुनस्तत्कार्यजननेऽनेककारकोपसंहारदर्शनाद्विचित्रजगज्जननसमर्थस्यापि ब्रह्मणोऽसहायस्य जनयितृत्वानुपपत्तेः ॥ राद्धान्तस्तु–क्षीरस्य दधिभावेऽन्यानपेक्षत्व(२)दर्शनादनेककारकोपसंहार(३)नियमो न दृश्यत इति ब्रह्मणोऽन्यानपेक्षस्यैव कारणत्वं संभवत्येव ॥ सूत्रं तु निगद(४)व्याख्यातम् । क्षीरवद्धीति प्रसिद्धवन्निर्देशश्चोयमान्यपरः ॥

देवादिवदपि लोके ॥ २५ ॥

यथा देवादयः स्वे स्वे लोके स्वापेक्षितानि स्वसंकल्पादेव वस्तूनि सृजन्ति तथा ब्रह्मापि । देवादेः शास्त्रावसेयशक्तितया ब्रह्मतुल्यत्वेऽपि तस्य सुखग्रहणायेति (५) मन्तव्यम् ॥

( कृत्स्नप्रसक्त्यधिकरणम् । )

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

ब्रह्मणो जगत्कारणत्वं संभवति नेति संशयः ॥ न संभवतीति पूर्वः पक्षः । निरवयवस्य ब्रह्मणो जगदुपादान-

(१) 'नवेति' मु०
(२) 'ऽनन्यापेक्षत्व' मु०
(३) 'दर्शनादुपसंहार' ग०
(४) 'सूत्रमपि' मु०
(५) 'तुल्यत्वेऽपि देवादिग्रहणं ब्रह्मणो विचित्रशक्तित्वस्य सुग्रहणायेति' मु०

त्वे कृत्स्नस्य ब्रह्मणो जगदाकारेणोपयोगप्रसंगाच्चपरिजिहीर्षया सावयवत्वाभ्युपगमे " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इत्यादिकारणावस्थायां निरवयत्ववाचिशब्दो(१) बाध्येत। यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते तथापि शरीरांशस्यापि कार्यत्वाभ्युपगमात्कृत्स्नस्य प्रसक्तिर्निरवयवत्वशब्दबाधो वा ॥ राद्धान्तस्तु—सकलेतरविसजातीयं श्रुत्यैकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यं च (२) भवत्सन्यच्च भवतीति परिमितशक्तिवस्तुचोद्यं तत्र न प्रसज्यते । यथा जातिवादिनो जातिरेकैवामूर्ता खण्डमुण्डादिष्वत्यन्तविलक्षणेष्वनन्तेष्वपि परिसमाप्यैव वर्तते । न तत्रेतरवस्तुचोद्यम् । इति जगत्कारणत्वं संभवत्येव ॥ सूत्रार्थस्तु—ब्रह्मकारणत्वे कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसङ्गः । निरवयवत्वान्निरवयवत्वशब्दकोपो वा । सावयवत्वे निरवयवत्ववादिशब्दबाधप्रसङ्ग इत्यर्थः ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । श्रुतेः श्रुतिप्रामाण्यान्नैवं प्रसज्यते । शब्दमूलत्वात् शब्दैकमूलत्वेन सकलेतरविसजातीयत्वादित्यर्थः ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

आत्मनि चैवं जीवात्मन्यचेतनधर्मासक्तिश्चैवं अचेतनाविसजातीयत्वादेवेत्यर्थः । विचित्राश्च हि अचेतनेषु च

---

(१) ' वाची सच्छब्दो ' ग० (२) ' कार्यं कारणं च ' पा०

विस(१)जातीयेष्वग्निजलादिषु विचित्रा हि शक्तयोऽपि दृश्यन्ते। एवं परमात्मनश्चेतनाचेतनविसजातीयस्य विचित्राः शक्तय उपपद्यन्ते (२) ॥

स्वपक्षदोषाच्च ॥ २९ ॥

प्रधानादिकारणपक्षे दोषाच्च ब्रह्मैव कारणम्। तत्र हि लौकिकवस्तुसजातीयत्वेन प्रधानादेरुक्तदोषोऽन्ये च प्रसज्येरन् ॥

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

न केवलं सकलेतरविसजातीयत्वेन सर्वशक्त्युपेता परा देवतोच्यते। तद्दर्शनाच्च सर्वशक्तियोगश्रुतेरित्यर्थः। दर्शयतीति दर्शनं श्रुतिः (३) " पराऽस्य शक्तिर्विविधैव श्रूयते " इत्यादिका ॥

विकरणत्वान्नेति चेन्न तदुक्तम् ॥ ३१ ॥

उक्तस्यार्थस्य द्रढिम्ने चोद्यपूर्वकं पूर्वोक्तं स्मारयति। विकरणत्वात्करणविरहितत्वाद्ब्रह्म न कारणमिति चेत्। " न तस्य कार्यं करणं च विद्यते " इति श्रूयते (४)। तदुक्तं तत्र यद्वक्तव्यं तत्पूर्वमेवोक्तं "शब्दमूलत्वात्–विचित्राश्च हि" इत्ययमेव परिहारः। शब्दैकमूलत्वेन सकलेतरविसजातीयत्वाद्ब्रह्मणः। विसजातीयानां च शक्तिवैचित्र्यस्य लोकदृष्टत्वात्सर्वमुपपन्नमित्यर्थः ॥

---

(१) 'तनेषु चिद्विस' क०

(२) एवमित्यादि वाक्यं मुद्रित एवास्ति।

(३) 'दर्शयति च श्रुतिः सर्वशक्तियोगम्' पा०

(४) इदं शङ्काकारोक्तविकरणत्वाभ्युपगमसूचकम्।

( प्रयोजनवत्त्वाधिकरणम् । )

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

ब्रह्मणो जगत्कारणत्वं संभवति नवेति संशयः ॥ न-संभवतीति पूर्वः पक्षः । बुद्धिपूर्वारम्भाणां सप्रयोजनत्वात् । ईश्वरस्य च स्वत एवाप्तसमस्तकामस्य जगत्सृष्ट्यारम्भ-प्रयोजनाभावात् । गर्भवासादिदुःखरूपत्वात्सृष्टेः परानुग्रहे-णापि न सप्रयोजनत्वम् ॥ राद्धान्तस्तु—परिपूर्णस्यापीश्वर-स्य केवललीलाप्रयोजनाय जगत्सृष्ट्याद्यारम्भः संभवति । यथा लोके सप्तद्वीपवतीं मेदिनीमधितिष्ठतो महाराजस्य परि-पूर्णस्यापि केवललीलार्थे (१) कन्दुकाद्यारम्भा दृश्यन्ते तद्व-दीश्वरस्यापि लीलाप्रयोजनाय (२) जगत्सृष्ट्यारम्भः संभवति ॥ सूत्रार्थस्तु—प्रयोजनवत्त्वात्सृष्टेरीश्वरस्य स्वतः परिपूर्णस्य प्रयोजनाभावान्न स्रष्टृत्वम् ॥

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

लीलाकैवल्यं लीलायाः प्रयोजनत्वे कैवल्यं संभवति । केवलाया लीलायाः सृष्ट्यारम्भप्रयोजनत्वं संभवतीत्यर्थः । लोकवत् यथा लोके राज्ञः कन्दुकाद्यारम्भे ॥

देव(३)मनुष्यादिविषमसृष्ट्या पक्षपातप्रसङ्गाद्दुर्विषहदुःख-गर्भत्वेन नैर्घृण्यप्रसङ्गाच्च परमकारुणिकस्य परमपुरुषस्य ली-लार्थमपि जगत्सर्गो न संभवतीत्याशङ्क्याह—

---

(१) 'केवललीलैकफला.' पा०

(२) 'लीलाप्रयोजनाय' इति ग० पुस्तके पवास्ति।

(३) 'नन्वीश्वरस्य लीलैकफला जगत्सृष्टिर्न संभवति, देव' पा०

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

ईश्वरस्य विचित्रजगत्सृष्टौ देवादिवैषम्यपक्षपातो दुःखगर्भजगत्सर्ग(१)नैर्घृण्यं च न सम्भवतः। वैषम्यादावीश्वरस्य क्षेत्रज्ञकर्मसापेक्षत्वात् । क्षेत्रज्ञानां पूर्वपूर्वकर्म पर्यालोच्य तत्तत्कर्मानुगुणं विषमं जगत्सृजतीति तत्तत्कर्मैव वैषम्यादिहेतुरित्यर्थः । तथा देवादियोगं क्षेत्रज्ञानां तत्तत्कर्मसापेक्षं दर्शयति हि श्रुतिः " साधुकारी साधुर्भवति पापकारी पापो भवति " इति ॥

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

सृष्टेः प्राक्कर्म न विद्यते क्षेत्रज्ञाभावात् । तदभावश्च "सदेव सोम्येदमग्र आसीत्" इत्यवधारणावगतादविभागादिति चेन्न । अनादित्वात् क्षेत्रज्ञानां तत्कर्मप्रवाहाणां च । उपपद्यते च क्षेत्रज्ञ(२)स्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिः । अन्यथाऽकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । उपलभ्यते च श्रुतिस्मृत्योः क्षेत्रज्ञानादित्वम् " तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते " इति नामरूपव्याकरणमात्रश्रवणात्क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम् । " ज्ञाज्ञौ द्वावजावीशनीशौ । नित्यो नित्यानां चेतनश्चेतनानाम् । प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इ-

(१) ' दु:खप्रदजगत्सर्गे ' मु०
(२) ' पद्यते चानादित्वम् । क्षेत्रज्ञ ' ग० ' पद्यते चानादिकर्मसहकृतक्षेत्रज्ञ ' क०

ति । अविभागश्रुतिरपि नामरूपविभागाभावादुपपद्यत इत्यभिहितम् (१) ॥

सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

प्रधानपरमाण्वादिष्वनुपपन्नानाम् "स्वपक्षदोषाद्" इत्यादिपूक्तानां सर्वेषां धर्माणां कारणत्वोपपादका(२)नां ब्रह्मण्युपपत्तेश्च ब्रह्मैव कारणम् । प्रधानपरमाण्वादीनां परिमितशक्तित्वाल्लोकदृष्टवस्तुसजातीयत्वाच्चानुपपत्तयः सहस्रशः सन्ति । ब्रह्मणः शास्त्रैकसमधिगम्यतया (३) सकलेतरविसजातीयत्वेनाचिन्त्यशक्तित्वात्सर्वशक्तित्वश्रुतेश्च सर्वमुपपन्नमित्यर्थः ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे द्वितीयस्याध्यायस्य प्रथमः पादः ।

---

( रचनानुपपत्त्यधिकरणम् । )

रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

सांख्यतन्त्रसिद्धः प्रधानकारणवादः किं समीचीनयुक्तिमूल उत नेति संशयः ॥ समीचीनयुक्तिमूल इति पूर्वः पक्षः । घटादिवद्विचित्रसंनिवेशं जगत्कार्यं तद्वदेव सरूपकारणविशेषारब्धम् । सुखदुःखमोहरूपतया सत्त्वाद्यात्मकं जगत्सत्त्वरजस्तमोमूलम् । तत्र महदादिपृथिव्यन्तानां घटादिवत्परिणामित्वाविशेषात्ते जगदुत्पत्तौ कारणकाष्ठा न भवन्ति । तेषां परिमितत्वेनापरिमितजगदुपादानाशक्तेरन्यूनातिरिक्तानि साम्यावस्थान्यपरिमितानि सत्त्वरजस्तमांस्यव्यक्तप्रधानादिशब्दाभिधेयानि जगत्कारणम् ॥ राद्धान्तस्तु—रथप्रासादादिनिर्माण-

(१) ' अभिप्रायः ' मु० ग० (२) ' त्वोपपादिता ' क०
(३) ' ब्रह्मकारणत्वे शास्त्रैकसमधिगम्यस्य ब्रह्मणः ' या०

हेतुभूतदार्वादिवदचेतनं प्रधानं स्वस्वभावार्थांश्चेतनानाधिष्ठितं विचित्रजगद्रचनासमर्थमिति केवलं प्रधानमकारणम् ॥

सूत्रार्थस्तु—अनुमीयत इत्यनुमानम् । तस्याचेतनस्य प्राज्ञानधिष्ठितस्य विचित्रसंनिवेशजगद्रचनानुपपत्तेस्तन्न कारणम् । अचेतनस्य दार्वादेस्तद्ज्ञानधिष्ठितस्य रथप्रासादादिरचनानुपपत्तेर्दर्शनात्तदधिष्ठितस्य रचनाप्रवृत्तेर्दर्शनाच्च (१) चकारात्सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासंभवं समुच्चिनोति । सत्त्वादयो हि कार्यगतलाघवप्रकाशादिहेतुभूताः कारणभूतपृथिव्यादिगतास्तत्तत्स्वभावविशेषाः ॥ प्रवृत्तेश्च । अनुपपत्तेरिति वर्तते । प्राज्ञानाधिष्ठितस्य प्रधानस्य विचित्रजगद्रचनानुगुणपरिस्पन्दरूपप्रवृत्त्यनुपपत्तेश्च प्रधानमकारणम् ॥ (२)

पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥

पयसोऽम्बुनश्च यथा प्राज्ञानधिष्ठितस्यैव दधिभावेन नारिकेलरसादिविचित्ररूपेण च परिणामो दृश्यते तद्वत्प्रधानस्यापि केवलस्य जगदाकारेण परिणाम उपपद्यत इति चेत्परिहरति । तत्रापीति । तदपि पक्षीकृतमित्यर्थः । यत्र रथादावचेतनस्य प्राज्ञाधिष्ठितत्वं दृष्टं तद्व्यतिरिक्तं हि सर्वं पक्षीकृतमेव "योऽप्सु तिष्ठन्" इत्यादिश्रुतेस्तदपि प्राज्ञाधिष्ठितम् ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

सर्गव्यतिरेकेण प्रतिसर्गावस्थाया अनवस्थितिप्रसङ्गाच्च

---

(१) इयं पङ्क्तिः क० पुस्तक एवास्ति ।

(२) 'प्रवृत्तेश्च ।' इत्यादिग्रन्थः क० पुस्तके नास्ति ।

केवलं प्रधानमकारणम् । अन्यानपेक्षत्वात्प्रधानस्य सर्वदैव सृष्टिः प्रसज्यते ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

धेन्वादिनोपयुक्तं हि तृणोदकादि स्वयमेव क्षीराकारेण परिणमते (१) तद्वत्प्रधानमपीति च वक्तुं न शक्यते । धेन्वादिनोपयुक्तस्यापि तृणादेः क्षीराकारेण परिणामः प्राज्ञाधिष्ठितत्वादेव भवतीत्यभ्युपेत्यम् (२) । कुतः । अन्यत्राभावात् अनडुहाद्युपयुक्तस्य प्रहीणस्य वा तृणादेः क्षीराकारेण परिणामाभावात् ॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

प्राज्ञानधिष्ठितमपि प्रधानं चैतन्यमात्रवपुर्निष्क्रियः पुरुषः स्वसंनिधिमात्रेण सर्गादौ प्रवर्तयति, यथा दृक्शक्तियुक्तो गमनशक्तिविकलः पङ्गुः पुरुषोऽन्धं दृक्शक्तिविकलं प्रवृत्ति शक्ति युक्त स्वसंनिधानात्प्रवर्तयति यथा चायस्कान्ताश्मा स्वसंनिधानादयः प्रवर्तयति तद्वदिति चेत्परिहरति । तथापीति ।तद्वदापि प्रधानस्य प्रवृत्तिर्नोपपद्यते । तत्र हि पङ्गोः पुरुषस्य गमनशक्तिविकलस्यापि मार्गोपदेशादिव्यापारः कादाचित्को दृश्यते।अन्धस्य चाक्षुषव्यापारविरहेऽपि पङ्गूपदेशादिग्रहणादिश्चेतनधर्मोऽस्ति । अयस्कान्तमणेरप्ययःप्रवृत्तो कादाचित्कमयःसंनिधानं विद्यते । इह तु संनिधिमात्रातिरेको तादृशः कश्चिद्विशेष उभयत्रापि न विद्यते । पुरुषसंनिधा-

---

(१) परिपूर्वाण्णमेरात्मनेपदं कथमिति न विद्म. । अस्ति तु शाङ्करादिभाष्येष्वप्येव प्रयोग. ।

(२) 'यतिस्तु (३।१।१०९)' इति क्यपि तुक् (६।१।७१)।'अभ्युपेतव्यम्' मु०

नस्य नित्यत्वेन नित्यसर्गप्रसक्तिः । तथा सति प्रतिसर्गाभावोऽ(१) पवर्गाभावश्च॥

आङ्गित्वानुपपत्तेश्च ॥ ६ ॥

इतश्च । गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गिभावेन जगत्प्रवृत्तिरनुमिता प्रतिसर्गावस्थायां साम्यावस्थानामेकस्योत्कर्षरूपाङ्गित्वानुपपत्तेश्च न संभवति । तत्राप्युत्कर्षोऽस्तीति चेत्सर्वदा सर्गप्रसगः ॥

अन्यथाऽनुमित्तौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

उक्तप्रकाराद्व्यतिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगाद्रचनानुपपत्त्यादयो दोषास्तदवस्थाः ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

प्रधानानुमित्यभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तदनुमेयम् । पुरुषस्य भोगापवर्गार्थतया हि प्रधानप्रवृत्तेः सप्रयोजनत्वम् । चैतन्यमात्रवपुषो निष्क्रियस्य नित्यं निर्विकारस्येतरेतराध्यासकृतप्रकृतिदर्शनरूपभोगस्तद्विवेकरूपोऽपवर्गश्च न संभवति । निर्विकारस्यैव प्रकृतिसंनिधानेन संभवतीति चेत् । उभयोर्नित्यत्वेन सर्वगतत्वेन संनिधानस्य नित्यत्वादपवर्गासिद्धिः । तथाविधसंनिधेरेवापवर्गत्वे भोगासिद्धिश्च ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

विप्रतिषिद्धं चेदं सांख्यानां दर्शनम् । प्रकृतेः परार्थतया पुरुषो द्रष्टा भोक्ताऽधिष्ठातेत्याहुः । प्रकृतेश्च पुरुषस्य भोगापवर्गार्थतया सप्रयोजनत्वं च (२) । प्रकृत्यैव साध-

(१) प्रतिसर्गः प्रलय. । (२) 'आह.' इति सबन्धः ।

नभूलया पुरुषो भोगमपवर्गं चाश्नुत इति चोक्तैव पुरुषश्चैतन्यमात्रवपुर्नित्यो निर्विकारो न द्रष्टा न भोक्ता न कर्तेति च (१)। अत एव पुरुषो न बध्यते न च मोक्षसाधनमनुतिष्ठति न मुच्यत इति वदन्ति । प्रकृतिरचेतनभूतैव पुरुषसंनिधानात्पुरुषधर्मं चैतन्यं स्वस्मिन्स्वधर्मं कर्तृत्वं पुरुषे चानुसधाय बध्यते मोक्षसाधनमनुतिष्ठति मुच्यत इति चाहुः । अध्यासरूपमनुसन्धानं हि चेतनधर्मः । तथा प्रकृतिरनुपकारिणः पुरुषस्य भोगापवर्गरूपं प्रयोजनं साधयन्त्युपकारिणीति चाहुः । अध्यासरूपबन्धादयः पुरुषस्य न सन्ति चेत्कस्तस्योपकारः । एवमाद्यन्योन्यविरुद्धभाषणादसमञ्जसम् ॥

(*महद्दीर्घाधिकरणम् ।*)

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् (२)॥ १० ॥

किं काणादपरमाणुकारणवादः समीचीनयुक्तिमूल उत नेति संशयः ॥ समीचीनयुक्तिमूल इति पूर्वः पक्षः । अवयवसंयोगाद्द्रव्यव्युत्पत्तिदर्शनादवयवाल्पत्वप्राचुर्याभ्यां सर्षपमहीधरवैषम्यदर्शनाच्चावयवाल्पत्वकाष्ठाऽवश्याभ्युपगमनीयेति परमाणुसिद्धिः (३) ।ते कार्यानुगुण्येन चतुर्विधाः (४)प-

(१) 'आहु' इतिसंबन्ध ।

(२) प्रधानकारणवादं निरस्य प्रसङ्गात्परमाणुकारणतां निराचष्टे । अनुमानासिद्धत्वाविशेषादुभयोरेकहानेऽपरस्मृतिर्निराबाधा ।

(३) अत्र परमाणुस्त्रसरेणोः षष्ठोऽवयव । न च त्रसरेणावेवावयवधाराविश्रमोऽस्त्विति वाच्यम् । चाक्षुषद्रव्यत्वेन त्रसरेणोः सावयवत्वात् । कपालवद्द्व्यवयवानामपि महदवयवत्वेन सावयवत्वादित्याशय ॥

(४) क्षित्यप्तेजोमरुत्सवन्धिन इति बोध्यम् ।

रमाणवो विपाकदशापन्नक्षेत्रज्ञादृष्टसचिवाः (१) परमेश्वराधिष्ठिता (२) द्व्यणुकादिक्रमेण जगदारभन्त इति॥राद्धान्तस्तु—अवयवाः स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानाः स्वस्मान्महान्तमवयाविनमुत्पादयन्तीति परमाणूनामपि तथैवोत्पादकत्वमभ्युपेत्यम्।तथा सति परमाणवोऽपि सांशाः स्वकीयैरवयवैस्ते च स्वकीयैरिति न काचित्कारणव्यवस्थितिः॥सूत्रार्थस्तु—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । असमञ्जसमिति वर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत्त्र्यणुकद्व्यणुकोत्पत्तिवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसम् ॥ (३)

द्व्यणुकादिक्रमेणारम्भकत्व कारणानवस्थितेरसमञ्जसं किमत्रान्यदसमञ्जसमित्यत्राह—

उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

परमाणूनामाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते । तददृष्टं किमणुगतमुत क्षेत्रज्ञगतम् । उभयथाऽप्यदृष्टस्याकादाचित्कत्वेन सर्वदोत्पादकत्वप्रसङ्गात् कादाचित्कं कर्म न सं-

(१) एतेन सर्गप्रवृत्तौ हेतुरुक्तः ।
(२) इत्थं च चेतनाधिष्ठानप्रयुक्तदोषाभावः सूचितः ।
(३) अयमत्र सिद्धान्तनिष्कर्षः।पूर्वोक्तपरमाणुसाधकानुमानद्वयमप्रयोजकम्।अन्यथा षडवयवसंयोगं विनाऽवयव्युत्पादायोगादवयवधाराऽनवस्थाप्रसङ्गः ।इत्थं च त्रसरेणुपुञ्जैरेव निर्वाहे नातिरिक्तमवयविनमप्यभ्युपगच्छामः । नचैवं सति विशकलितेष्वपि घटावयवेषु घट इति प्रतीतिः स्यादिति वाच्यम् । विलक्षणसंयोगविशिष्टस्यैव त्रुटिपुञ्जस्य घटादिप्रतीतिनिर्वाहकत्वाभ्युपगमात् । इत्थं च नास्माकमतिरिक्तचित्ररूपाङ्गीकारनिर्बन्धोऽपीति ॥

भवतीत्यतः कर्मणा परमाणुसंयोगाभावः । विपाकापेक्षत्वेऽपि नानाविधानन्तादृष्टानामेकदैकरूपविपाकश्च न संभवति । अनुमानेनेश्वरासिद्धेरीश्वरेच्छयाऽपि नियमो न संभवति ॥

समवायाभ्युपगमाच्च साम्यादन-
वस्थितेः ॥ १२ ॥

समवायाभ्युपगमाच्चासमञ्जसम्। समवायो हि जातिगुणादीनां द्रव्यविशेषान्प्रत्यपृथक्सिद्धिहेतुतयाऽभ्युपगम्यते । समवायस्यापि तथाभावे हेत्वपेक्षासाम्यादनवस्थितिः । समवायस्य तथाभावः स्वाभाविक इति चेत् । जातिगुणादीनामेवैष स्वभाव इति युक्तम् ॥(१)

नित्यमेव च भावात् ॥ १४ ॥

इतश्च(२)। समवायसंबन्धस्य नित्यत्वाभ्युपगमात्संबन्धिनि-

(१) समवायस्य स्वस्वरूपमेव संबन्ध इति न तत्र संबन्धान्तरापेक्षेति शङ्काकाराशयः । तर्हि प्रथमं जात्यादीनां तत्तत्स्वस्वरूपस्यैव संबन्धता कुतो नाभ्युपगम्यत इति सिद्धान्तिमतम् । इदं च समवायनानात्वमते । समवायस्यैक्ये पृथिव्यां गन्धसम्बन्धो न जल इति धीर्विराध्यति ॥

(२) ननु समवायस्य स्वरूपसंबन्धेन गतार्थत्वस्वीकारे तत्तत्स्वरूपभेदेनानन्तानां सम्बन्धत्वकल्पने गौरवम्, नास्माकम्, प्रत्येकजाति समवायस्यैक्यात्, एवं प्रत्येकजातीयगुणादि च समवायस्यैक्याभ्युपगमादिति चेन्न। प्रत्येकजाति च आधेयस्वरूपस्यैव संबन्धत्वस्य स्वीकारात् । गुणादिस्थले तु शुक्लं रूपं न नीलसमवेतम् तच्छुक्लं नैतच्छुक्लसंबन्धि इत्यादिप्रतीत्या प्रतिव्यक्ति सम्बन्धभेदोऽभ्युपगन्तव्यः । एवमभ्युपगमे नित्यत्वाभ्युपगमोऽपि न रुचिर इत्याह ॥ नित्यमेव च भावादित्यनेन ॥

सत्वमन्तरेण तदनुपपत्तेरवयवावयविनोरुभयोरपि नित्यमेव भावात्कार्यकारणभाव एव न सिद्ध्यति ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

परमाणूनां नित्यत्वनिरवयवत्वादिविपर्ययश्च स्यात् । रूपादिमत्त्वात्तेषां घटादिषु रूपादिमत्सु तथा दर्शनात् । दर्शनादेव हि भवदभिमतं परिकल्प्यते ॥

उभयथा च दोषात् ॥ १६ ॥

अनित्यत्वादिभयात्परमाणूनां रूपादिशून्यत्वे कार्यगुणस्य कारणगुणपूर्वकत्वासिद्धिः । तत्सिद्धये रूपादिमत्त्वे चानित्यत्वादिप्रसक्तिरित्युभयथा च दोषादसमञ्जसमेव ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

कापिलपक्षे हि श्रुतिन्यायविरुद्धेऽपि सत्कार्यवादादि किंचिद्वैदिकैः परिगृह्यते । काणादे तु कस्य चिदंशस्य वैदिकैः परिग्रहाभावादनुपपन्नत्वाच्च निःश्रेयसार्थिभिरत्यन्तमनपेक्षा कार्या ॥ (१)

( समुदायाधिकरणम् । )

समुदाय उभयहेतुकेऽपि तदप्राप्तिः (२)॥ १८ ॥

सौगताश्चतुर्विधाः । प्रत्यक्षसिद्धस्थूलद्रव्यवादिनः केचिद्वैभाषिकाः।अन्ये पृथिव्यादिविज्ञानानुमेयस्थूलद्रव्यवादिनः।ते च सौत्रान्तिकाः। अपरे निरालम्बनविज्ञानमात्रसद्भावं वदन्ति योगा-

(१) इदं चातिभूमिं गतेनाग्रहेण ।

(२) एवं सदातनपरमाणुकारणतावादिनं मूकीकृत्य क्षणिकपरमाणुकारणतावादिविध्वंसनाय प्रयतते ।

चाराः। त्रयोऽप्येते स्वाभ्युपगतवस्तुनः क्षणिकत्वं वदन्ति। अन्ये तु सर्वशून्यवादिनो माध्यमिकाः। तत्राद्ययोर्बाह्यार्थसद्भावमभ्युपगच्छतोर्जगदुत्पत्तिप्रकारो लोकव्यवहारश्च किं सूपपाद उत दुरुपपाद इति संशयः॥ सूपपाद इति पूर्वः पक्षः। तथा हि। पार्थिवाप्यतैजसवायवीया गन्धादियुक्ताः परमाणवः पृथिव्यादिरूपेण संहता भवन्ति। तेभ्यश्च शरीरेन्द्रियविषयलक्षणसंघाताः। तत्रान्तरविज्ञानसंतानो ग्राहकाभिमानारूढ आत्मत्वेनावतिष्ठते। एषु क्षणिकेष्वपि स्थिरत्वादिगोचरबुद्ध्याख्याविद्यया सर्वमुपपद्यत इति जगदुत्पत्तिर्लोकव्यवहारश्च युज्यते॥ राद्धान्तस्तु—क्षणध्वंसिनः परमाणवः कदा संहतौ व्याप्रियन्ते। कदा संहन्यन्ते। संहतौ व्याप्रियन्तस्तस्मिन्नेव क्षणे विनष्टाश्चेत्के पुनः संहन्यन्ते। कश्च विज्ञानात्मा कदा कं विषयं स्पृशति। कश्च कदा कं जानाति। कश्च कदा कमर्थमुपादत्ते। स्प्रष्टा नष्टः स्प्रष्टव्यं च नष्टं वेदिता च नष्टो वेद्यं च नष्टम्। कथमन्येन स्पृष्टमन्यो जानाति कथं वाऽन्येन विदितमन्य उपादत्ते। संतानैकत्वे सिद्धेऽपि संतानिभ्यः संतानस्य परमार्थतो वस्त्वन्तरत्वानभ्युपगमात्संतानैकत्वं परमार्थिकमकिंचित्करम्। स्थिरत्वाद्यविद्ययाऽपि संघातोत्पत्तिर्न संभवति। न हि शुक्तिकादिषु रजताद्यविद्यया शुक्तिकारजताद्युत्पत्तिसंभवः। विदुषश्च पूर्वस्य नष्टत्वेनोत्तरेणाविदुषा पूर्वविनष्टेन विदुषाऽनुसंहितार्थोपादानं न संभवति। संस्काराश्रयत्वेन चैकोऽर्थः स्थिरो नोपगम्यते। अतो जगदुत्पत्तिर्लोकव्यवहारश्च दुरुपपाद एव॥ सूत्रार्थस्तु—उभयहेतुकेऽपि समुदाये समुदायाप्राप्तिः। परमाणुहेतुकः पृथिव्यादिसमुदायः, पृथिव्यादिहेतुकः शरीरेन्द्रियस-

मुदाय इत्युभयहेतुकोऽपि समुदायः क्षणिकत्वाभ्युपगमादुक्तेन न्यायेन न सिध्यतीत्यर्थः ॥

इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघात-

भावानिमित्तत्वात् ॥ १९ ॥

यद्यपि क्षणिकाः सर्वे भावास्तथाप्यविद्यादीनामितरेतरहेतुकत्वादुपपन्नं लोकव्यवहारादिकम्, अस्थिरेषु स्थिरत्वबुद्धिरूपाविद्यया तत्र तत्र रागद्वेषादयो जायन्ते, इत्येवमादिपरम्परया पुनरप्यविद्येति चक्रवत्परिवर्तत इति चेन्नैतदुपपद्यते। संघातभावानिमित्तत्वात् अविद्यायाः। यद्यप्यविद्याख्या विपरीतबुद्धिः क्षणिकं स्थिरत्वेन विषयीकरोति, तथापि तत्र वस्तुतः स्थिरं भवतीति वस्तुतः स्थिरकार्यं न करोति। अतः संघातभावो न सिध्यतीत्यर्थः। अस्थिरे स्थिरत्वबुद्धियुक्तस्य विज्ञानात्मनस्तदैव नष्टत्वात्कस्य रागद्वेषादयो जायन्त इति रागद्वेषादिपरम्परा च न सिध्यतीत्यभिप्रायः ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

इतश्च। उत्तरघटोत्पत्तिवेलायां पूर्वस्य विनष्टत्वादज्ञानस्यैव हेतुत्वेनाविशेषात्सर्वेषां सदोत्पत्तिः प्रसज्येत। पूर्वक्षणवर्तिनो देशस्य हेतुत्वोपगमेऽपि देशादेर्विशेषकस्य स्थिरस्यैकस्यानभ्युपगमात्। अविशेषेणोत्तरक्षणवर्तिनस्त्रैलोक्यगतस्य सर्वस्य हेतुः स्यात् ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असत उत्पत्तौ प्रति[illegible]विरोधश्च भवताम्। अधिपतिसह-

कार्यादीनां विज्ञानोत्पत्तिहेतुत्वप्रतिज्ञानात् । अथैतत्परिजिहीर्षया पूर्वघटक्षणस्तिष्ठतीत्युच्येत तदा युगपद्घटक्षणद्वयोपलब्धिप्रसङ्गः । न चोपलभ्यते ॥

ततो निरन्वयविनाशोऽपि न संभवतीत्याह—

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

प्रतिसंख्याप्रतिसंख्यानिरोधयोः स्थूलसूक्ष्मविनाशयोरप्राप्तिरित्यर्थः । स्थूलविनाशो मुद्गराभिघाताद्यनन्तरभाव्युपलब्धियोग्यः । सूक्ष्मस्तु प्रतिक्षणभाव्युपलब्ध्यनर्हः । तौ निरन्वयौ न संभवतः । उत्पत्तिविनाशधर्मभागिनो द्रव्यस्याविच्छेदात्तदनन्यत्वमिति सत्कार्यवादस्योपपादितत्वादित्यभिप्रायः । घटादौ कपालादिरूपावस्थया निरन्वयविनाशादर्शनात्प्रदीपनिर्वाणेऽपि सूक्ष्मावस्थाप्राप्तिरित्यविरोधः ॥

उभयथा च दोषात् ॥ २३ ॥

उत्पन्नस्य तुच्छत्वापत्तौ तुच्छादुत्पत्तौ चेत्युभयप्रकारे च दोषात्ते न संभवतः । उत्पन्नस्य तुच्छताऽऽपत्तौ पश्चात्तुच्छादुत्पद्यमानं जगत्तुच्छात्मकमेव भवति । मृत्सुवर्णादेरुत्पद्यमानमृत्सुवर्णाद्यात्मकघटमुकुटादिवत् । अतस्तुच्छताऽऽपत्तिस्तदुत्पत्तिश्च न संभवतः ॥

आकाशे चाविशेषात् ॥ २४ ॥

आकाशे तुच्छस्वरूपता न संभवति । अबाधितप्रतीतिसिद्धपृथिव्यादिवदाकाशेऽप्यबाधितप्रतीतेरविशेषात् । प्रती-

यते ह्याकाशे "अत्र श्येनः पतति, अत्र गृध्रः" इति श्येनादेः पतनदेशत्वेन (१) ॥

## अनुस्मृतेश्च ॥ २५ ॥

प्रत्यभिज्ञानाच्च घटादेरक्षणिकत्वम्। "तदेवेदम्" इति हि प्रत्यभिज्ञायते । प्रत्यभिज्ञा हि नामातीतवर्तमानकालवर्त्येकवस्तुविषयमेकं प्रत्यक्षज्ञानम् । तस्य कालद्वयसंबन्धविशिष्टमेकमेव वस्तुविषयः । न च तदित्यंशः स्मरणं इदमित्यंशश्च ग्रहणं अतीतकालसंबन्धिनीन्द्रियसंप्रयोगाभावादिति वाच्यम् । तदिदमिति सामानाधिकरण्येन ग्रहणस्यैकत्वेन स्फुरणात्। पूर्वानुभवजनितसंस्कारसचिवेन्द्रियसंप्रयोगयुक्तपुरुषस्य तथा ग्रहणमुपपद्यत एव । अन्वयव्यतिरेकाधीनं हि सर्वत्र सामग्रीपरिकल्पनम् । न च ज्वालादिवत्सादृश्यनिबन्धनप्रत्यभिज्ञेति त्वया शक्यते वक्तुमाकालद्वयवर्तिनोर्द्वयोः सादृश्यानुसंधातुर्ज्ञातुरेकस्यानभ्युपगमात् ॥

पृथिव्यादिविज्ञानानुमेयवादी तु ज्ञाने नीलपीतादिविचित्राकारं दृष्ट्वा ज्ञानात्पूर्वक्षणवर्तिनं ज्ञाने स्वाकारं समर्प्य विनष्टमर्थमनुमिनोति तत्रोत्तरम्—

## नासतोऽदृष्टत्वात् ॥ २६ ॥

असतो धर्मिणो धर्मस्यान्यत्र संक्रमणं न संभवति । कुतः । अदृष्टत्वात्। न हि धर्मिणि विनष्टे तद्धर्मस्यान्यत्र संक्रमणं क्वचिद्दृष्टम् ॥

---

(१) केचित्तु तादृशप्रतीतौ वायोरालोकस्य वा विषयत्वमित्याहुः । तन्मतेऽपि शब्दरूपगुणाश्रयस्य कथतरामभावरूपत्व- [illegible]

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

वैभाषिकसौत्रान्तिकयोर्द्वयोरपि साधारणमिदं दूषणम्। एवं सर्वभावानां क्षणिकत्वाभ्युपगमे सति उदासीनानां निष्प्रयत्नानामप्यैहिकामुष्मिकसर्वार्थसिद्धिः स्यात्। प्रयत्नाद्यनुतिष्ठतः तदानीमेव विनष्टत्वात्। संस्कारादेरपि कस्य चित्स्थिरस्यानुवर्तमानस्यानभ्युपगमात्। पश्चादागता सिद्धिरहेतुकीति निष्प्रयत्नानामपि सर्वार्थसिद्धिः स्यात्॥

( उपलब्ध्यधिकरणम्। )

नाभाव उपलब्धेः ॥ २८ ॥

योगाचाराभिमतो ज्ञानमात्रसद्भाववादः किं समीचीनयुक्तिमूल उत नेति संशयः॥ समीचीनयुक्तिमूल इति पूर्वः पक्षः। बाह्यार्थसद्भाववादिनाऽपि तत्तदर्थज्ञानस्य प्रकाशमानत्वमवश्याश्रयणीयम्। सर्वस्य वस्तुनः प्रकाशमानस्य स्वासाधारणेनाकारेण प्रकाश इष्यते। तत्र घटपटादिज्ञानस्य घटपटाद्याकार एवाकारः। अन्यथा घटाद्यसाधारण्यं च तत्तज्ज्ञानस्य न संभवति। एकश्चायमाकार उपलभ्यते। स तु ज्ञानस्यैवेति तद्व्यतिरिक्तार्थसद्भावो न संभवति। तावतैव घटोऽयं ज्ञात इति व्यवहारश्चोपपद्यते। तस्य बहिरिवावभासो निर्मूलत्वाद्विभ्रमकृतः॥ राद्धान्तस्तु—घटमहं जानामीति सकर्मकस्य सकर्तृकस्य ज्ञाधात्वर्थस्य छेदनादिवत्सर्वलोकसाक्षिकमुपलभ्यमानस्य कर्तृकर्मव्यतिरेकेण केवलस्यैव सद्भावमनुन्मत्तः को ब्रवीति। स्वासाधारणाकारश्च तत्तच्छेदनादिवत्तत्तदर्थव्यवहारयोग्यताऽऽपादनाकारेणोपलभ्यते। एवं छेदनादेर्प्याकारो द्विधाभावनादिहेतुतयैव कर्तृगतश्चोपलभ्यते।

न ह्यमूर्तानां कर्तृकर्मनिरूपणीयस्वाकाराणां कर्माकारत्वमाश्रीयते ॥ सूत्रार्थस्तु–ज्ञानव्यतिरिक्तार्थाभावो न शक्यते वक्तुम् । उपलब्धेः घटमहं जानामीति जानातेः कर्मतया कर्तृतया चोपलब्धेः ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वप्नज्ञानादिवच्च जागरितज्ञानानां न मिथ्यात्वम् । तद्वैधर्म्यात् । निद्रादिकारणदोषबाधकप्रत्ययरहितत्वादित्यर्थः । चकारात्तान्यपि यथार्थानीत्यभिप्रायः ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

न केवलस्यार्थशून्यज्ञानस्य भावः संभवति । क्वचिदप्यनुपलब्धेः । अबाधितप्रतीतिसिद्धस्यार्थस्यासद्भावे सति ज्ञानमात्रस्याप्यसद्भावो न शक्यो निवारयितुमित्यभिप्रायः ॥

( सर्वथाऽनुपपत्त्यधिकरणम् । )

सर्वथाऽनुपपत्तेश्च ॥ ३१ ॥

माध्यमिकोक्तसर्वशून्यवादः संभवति नेति संशयः ॥ संभवतीति पूर्वः पक्षः । विज्ञानं घटपटादयश्च सर्वे भावा न सन्ति । कुतः । उत्पत्त्यनिरूपणात् । घटादिभावानां भावात्तावदुत्पत्तिर्न संभवति । घटादिरुत्पद्यमानो हि पिण्डादिकेऽनुपमृदिते नोत्पद्यते । पश्चादभावादुत्पद्यमानो घटादिरभावात्मक एव स्यादिति सर्वशून्यत्वमेव युक्तम् ॥ राद्धान्तस्तु–लोके भावाभावशब्दयोस्तद्बुद्ध्योश्च प्रमाणेनोपलभ्यमानस्यैव वस्तुनोऽवस्थाविशेष एव भावरूपो विषयः । वर्तमानतयोपल-

भ्यमानपृथुबुध्नोदरावस्थाविशेषो भावबुद्धिविषयः । तद्विरोध्यस्याविशेषोऽभावबुद्धिविषयः (१) । अतो न कुतश्चित्त्वदभिमतं तुच्छत्वं सिध्यति॥ सूत्रार्थः—सर्वथानुपपत्तेश्च। सर्वशून्यवादी सदिति प्रतिज्ञाय स्वाभिमतं साधयत्युतासदिति प्रतिज्ञायाथप्रकारान्तरेण । सर्वथा सर्वशून्यत्वानुपपत्तेः स्वाभिमतासिद्धिः । सद्भावासद्भावयोर्विद्यमानवस्तुधर्मत्वोपपादनात् ॥

( एकस्मिन्नसंभवाधिकरणम् । )

## नैकस्मिन्नसंभवात् ॥ ३२ ॥

जैनमतं युक्तिमदुत नेति संशयः ॥ युक्तिमदिति पूर्वः पक्षः । जीवाजीवशब्दाभिलपनीयभोक्तृभोग्यात्मकं जगत् । तच्च सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वैरनैकान्तिकम् । षड्द्रव्यतत्पर्यायात्मनावस्थितत्वात् । कृत्स्नस्य जगतो द्रव्यात्मना सत्त्वैकत्वनित्यत्वान्युपपन्नानि । पर्यायात्मना च विपरीतानि । पर्यायाश्च घटत्वपटत्वाद्यवस्थाविशिष्टा द्रव्यविशेषाः । द्रव्यस्वरूपस्यैकत्वात्स्थिरत्वात्सद्बुद्धिबोध्यत्वात्तेन रूपेणैकत्वादियुक्तं पर्यायशब्दाभिधेयावस्थाविशिष्टानामनेकत्वादस्थिरत्वादसद्बुद्धिबोध्यत्वात्तेन रूपेणासत्त्वानित्यत्वनानात्वानि युक्तानि। प्रतीतिव्यवस्थाप्यत्वात्सर्वस्य वस्तुन उभयाकारप्रतीतेरुभयमुपपन्नम् ॥ राद्धान्तस्तु—एकस्य द्रव्यस्यास्तित्वनास्तित्वादिभिरनैकान्तिकत्वमयुक्तम् । एकस्मिन्वस्तुन्यस्तित्वादेर्विरुद्धस्य छायातपवद्युगपदसंभवात् । तथाहि । द्रव्य-

---

(१) 'तद्विरोधिपिण्डाकारकपालाकारावस्थाविशेषः प्रागभावध्वं-

स्य तद्विशेषणभूतपर्यायशब्दा(१)भिधेयावस्थाविशेषस्य च "इदमित्थम्" इति प्रतीतेः प्रकारिप्रकारतया पृथक्पदार्थत्वात् नैकस्मिन्विरुद्धप्रकारभूतसत्त्वासत्त्वस्वरूपधर्मसमावेशो युगपत्संभवति । उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वं च द्रव्यस्यानित्यत्वम् । तद्विपरीतं च नित्यत्वम् । तदेकस्मिन्कथं सम्भवेदिति । विरोधि धर्माश्रयत्वं च भिन्नत्वम् । तद्विरीत चाभिन्नत्वम् । कथं वा तदेकस्मिन्सम्भवेदिति । यथाऽश्वत्वमहिषत्वयोर्युगपदेकस्मिन्नसंभवः । एकस्य पृथिवीद्रव्यस्य घटत्वाश्रयत्वं शरावत्वाश्रयत्वं च प्रदेशभेदेन । न त्वेकेन प्रदेशेनोभयाश्रयत्वम् । यथैकस्य देवदत्तस्योत्पत्तिविनाशयोग्यत्वं कालभेदेन । न ह्येतावता व्यात्मकत्वमपि तु परिणामशक्तियोगमात्रम् । अतो न युक्तिमज्जैनमतम् ॥ सूत्रार्थस्तु—नैकस्मिन्नसंभवात् । न जैनमतं युक्तम् । कुतः । एकस्मिन्नुक्तरीत्या युगपद्विरुद्धधर्मसमावेशासंभवात् । अतः सूत्रविरुद्धं वेदान्तवादिभिरपि भेदाभेदसमाश्रयणम् (२) ॥

एवं चात्माकार्त्स्न्यम् ॥ ३३ ॥

एव आत्मकार्त्स्न्यं चानुपपन्नं शरीरपरिमाणत्वे ह्यात्मनो बृहतः शरीरादल्पीयसि शरीरे प्रविशतोऽकार्त्स्न्यं अपरिपूर्णत्वं प्रसज्यते । तदानीमल्पपरिमाणत्वात् ॥

---

(१) 'पर्यायस्येत्थंशब्दा' मु०

(२) अयमर्थः । भट्टभास्करेण हि 'जैनोक्तसत्त्वासत्त्वादिसमर्थनवदेव जगद्ब्रह्मणोर्भेदाभेदसाधनमिति सूत्रविरोधस्तन्मते । प्रकारान्तरेण भेदाभेदसाधनं निर्दुष्टं श्रीमत्पिताम्हचरणैरार्यमतसंग्रहे संक्षेपतो निरूपितम् । केषुचित्पुस्तकेष्वियं पङ्क्तिर्नास्ति ॥

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥

तथाविधाल्पत्वावस्थायोगेनाप्यविरोधो न सम्भवति। घटपटादेरिव विकारतत्प्रयुक्तदोषास्पदत्वप्रसङ्गात् ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥

जीवस्य यदन्त्यं परिमाणं मोक्षस्थं तस्य पश्चादेकरूपेणावस्थितेस्तदेव स्वाभाविकपरिमाणमिति, आत्मनस्तत्परिमाणस्य चोभयोर्नित्यत्वात्पूर्वमपि न शरीरपरिमाणत्वसिद्धिरिति पूर्वावस्थाया न विशेषः। अतोऽसङ्गतमेवेदं जैनमतम् ॥

॥ (पशुपत्यधिकरणम् ।)

पत्युरसामञ्जस्यात् ॥ ३५ ॥

पशुपतिमतं निःश्रेयसार्थिभिरादरणीयमुत नेति संशयः॥ आदरणीयमिति पूर्वः पक्षः। सकलपुरुषार्थसाधनावबोधित्वेन निखिलवस्तुसाक्षात्कारसमर्थपशुपतिप्रणीतत्वात् ॥ राद्धान्तस्तु-अनादिनिधनाविच्छिन्नपादसंप्रदायनिरस्तप्रमादादिनिखिलदोषगन्धवेदसिद्धपरापरतत्त्वव्यत्ययप्रतिपादनान्निमित्तोपादानभेदाभिधानात्सुराकुम्भस्थापनतत्स्थदेवपूजामुद्रिकापङ्कविज्ञानतद्धारणरूपविरुद्धाचारप्रतिपादनाच्चासामञ्जस्यादनादरणीयमिति ॥ सूत्रार्थस्तु—पत्युरसामञ्जस्यात्। नैकस्मिन्न संभवादित्यतो नेत्यनुवर्त्तते। पत्युः पशुपतेर्मतं नादरणीयम्। कुतः। वेदविरुद्धतत्त्वाचारावबोधित्वेनासामञ्जस्यात् ॥

अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥

अनुमेयेश्वराभ्युपगमेन हि प्रधानस्याधिष्ठानत्वमीश्वरस्योच्यते । अशरीरस्यैव कुलालादेरधिष्ठानदर्शनादशरीरस्य प्रधानाधिष्ठानानुपपत्तेश्चासमञ्जसम् । सशरीरत्वाभ्युपगमेऽपि तच्छरीरस्य सावयवस्य नित्यत्वेऽनित्यत्वे च दोषः पूर्वोक्त इत्यभिप्रायः ॥

करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥

क्षेत्रज्ञस्य स्वकरणकलेवराधिष्ठानवदुपपद्यत इति चेन्न । पुण्यापुण्यरूपकर्मनिमित्तत्वात्क्षेत्रज्ञाधिष्ठानस्येश्वरस्यापि तद्वत्त्या तत्फलभोगादिनिखिलतत्स्वभावप्रसक्तेः ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥

वाशब्दश्चार्थे । तथा पुण्यापुण्यवत्त्वेऽन्तवत्त्वं सृष्टिसंहारास्पदत्वमसर्वज्ञता च प्रसज्यत इत्यसमञ्जसमेवेदम् ॥

( उत्पत्त्यसंभवाधिकरणम् । )

उत्पत्त्यसंभवात् ॥ ३९ ॥

सांख्यादिवत्पाञ्चरात्रतन्त्रमप्यप्रमाणमुत नेति संशयः ॥ अप्रमाणमिति पूर्वः पक्षः । "वासुदेवात्संकर्षणो नाम जीवो जायते" इति श्रुतिविरुद्धजीवोत्पत्त्यादिप्रतिपादनात् "चतुर्षु वेदेषु पुरुषार्थमलभमानः" इति वेदानादरश्रवणाच्च ॥ राद्धान्तस्तु—सङ्कर्षणप्रद्युम्नानिरुद्धानां परब्रह्मभावानाम् "अजायमानो बहुधा विजायते" इति श्रुतिसिद्धेच्छावतारप्रतिपादनान्न क्वचिच्छ्रुतिविरोधः । जीवाहङ्कारमनःशब्दाश्च तत्तच्छरीरकाणां सङ्कर्षणादीनामेवाभिधायकाः "तत्तेज ऐक्षत" इति तेजःप्रभृ-

तिशब्दवत् । "चतुर्षु वेदेषु पुरुषार्थमलभमानः" इति चानुदितहोमनिन्दावत् । "ऋग्वेदं भगवोऽध्येमि" इत्यारभ्य "चतुर्षु वेदेषु इतिहासं पुराणं पञ्चमम्" इत्यादिना सर्वेषु विद्यास्थानेषु चात्मवेदनाभाववचनं च वक्ष्यमाणप्रशंसार्थम् । तन्त्रेऽस्मिन्वेदान्तोदितब्रह्मोपासनविधानाद्वेदाविरुद्धतदर्चनाविधानाच्चावगम्यत इति प्रमाणमेव ॥ सूत्रार्थस्तु—"न जायते म्रियते" इत्यादिश्रुतेर्जीवस्योत्पत्त्यसंभवाज्जीवोत्पत्तिवचनाच्च न प्रमाणम् ॥

न च कर्तुः करणम् ॥ ४० ॥

"सङ्कर्षणात्प्रद्युम्नसंज्ञं मन उत्पद्यते" इति मनसः करणस्य कर्तुर्जीवादुत्पत्तिश्च श्रुतिविरुद्धत्वान्न संभवति । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति मनसो ब्रह्मण उत्पत्तिः श्रूयते ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥

वाशब्दात्पक्षो विपरिवर्तते । विज्ञानं च तदादि च विज्ञानादि ब्रह्म । सङ्कर्षणादीनां ब्रह्मभावे सति "अजायमानो बहुधा विजायते" इति श्रुतिसिद्धस्वेच्छावतारस्यैवाभिधानात्तदप्रतिषेधः प्रामाण्याप्रतिषेधः । सङ्कर्षणादीनां जीवादिशब्दानामधिकरणनिर्देशस्तेषामधिष्ठातृतयोपपद्यते ।

विप्रतिषेधाच्च ॥ ४२ ॥

अस्मिन्नपि तन्त्रे जीवोत्पत्तिविप्रतिषेधाच्चाविरुद्धमिदं तन्त्रम् ॥

"व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च ।

स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" ॥

इति पुरुषोत्पत्तिः प्रतिषिध्यते ॥

इति श्रीभगवद्रामानुजाचार्यविरचिते वेदान्तदीपे
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

( वियदधिकरणम् १ )

## न वियदश्रुतेः ॥ १ ॥

वियदुत्पद्यते नेति संशयः ॥ नोत्पद्यत इति पूर्वः पक्षः । निरवयवस्य सर्वगतस्य तस्यात्मन इवोत्पत्त्यसंभवात् । असंभावनीयस्य श्रवणं च न संभवति । अतस्तदुत्पत्तिश्रुतिर्गौणीति ॥ राद्धान्तस्तु—वियदुत्पद्यत एवोत्पत्तिश्रुतेः । अतीन्द्रियार्थविषयया श्रुत्याऽभिहितेऽर्थे निरवयवत्वादिहेतुकं नानुत्पत्त्यनुमानमुदेतुमलम् । आत्मनोऽप्यनुत्पत्तिश्रुतेरेव नित्यत्वम् । न निरवयवत्वादिना ॥ सूत्रार्थस्तु—वियन्नोत्पद्यते । कुतः । अश्रुतेः । श्रुतिः श्रवणम् । असंभावनीयस्य श्रवणाभावात् ॥

## अस्ति तु ॥ २ ॥

अस्ति तु वियदुत्पत्तिः । "आत्मन आकाशः संभूतः" इति श्रुतेः । अतीन्द्रियार्थविषयया श्रुत्या प्रमाणान्तराप्रतिपन्नवियदुत्पत्तिप्रतिपादनं संभवतीति । न "अग्निना सिञ्चेत्" इतिवदयोग्यमित्यर्थः ॥

## गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥

"तत्तेजोऽसृजत" इति प्रतिपन्नतेजःप्राथम्यविरोधान्नश्ये वियदुत्पत्तिर्न संभवतीत्युत्पत्तिश्रुतिर्गौणी । " वायुश्चान्तरिक्षं चैतदमृतम्" इत्यमृतत्वश्रवणाच्च ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

"आत्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः" इत्यादिषु सर्वत्रानुपक्तस्यैकसंभूतशब्दस्य आकाशे गौणत्वं वाय्वादिषु मुख्यत्वं च संभवति । ब्रह्मशब्दवत् यथैकस्य ब्रह्मशब्दस्यैकप्रकरणे श्रूयमाणस्य " तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते," इति प्रधाने गौणत्वं "तपसा चीयते ब्रह्म" इति ब्रह्मणि मुख्यत्वं च । श्रवणावृत्त्याविवानुषङ्गेऽप्यभिधानावृत्तेरनुषङ्गोऽपि तत्तुल्य इत्यभिप्रायः ॥

परिहरति—

प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

"येनाश्रुतं श्रुतम्" इति ब्रह्मज्ञानेनाकाशादिसर्वविज्ञानप्रतिज्ञाया अहानिराकाशस्यापि ब्रह्मण उत्पत्त्या तदव्यतिरेकादेव भवति ॥

शब्देभ्यः ॥ ६ ॥

इतश्च " सदेव सोम्येदमग्र आसीत् । ऐतदात्म्यमिदम्" इत्यादिभ्यो ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणसर्वात्मत्ववादिभ्यः शब्देभ्यश्च वियदुत्पत्तिः प्रतीयते । "तत्तेजोऽसृजत" इत्यस्मिन्वाक्ये आकाशोत्पत्त्यवचनात्प्रतीयमानतेजःप्राथम्यं समानप्रकरणस्थैः प्रकरणांतरस्थैश्च शब्दैः प्रतीयमानामाकाशोत्पत्तिं न वारयतीत्यभिप्रायः ॥

यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

। यद्यपि छान्दोग्ये "तत्तेजोऽसृजत" इतिवदाकाशोत्पत्तिः स्वरूपेण नाभिधीयते तथापि तस्मिन्नेव "ऐतदात्म्यमिद सर्वम्"इत्याकाशादेः सर्वस्य वस्तुनो ब्रह्मविकारत्ववचनाद्या-वद्विकार विभाग उत्पत्तिरक्केवेति गम्यते । लोकवत् यथा लोके सर्व एते देवदत्तपुत्रा इत्यभिप्राय तेषु केषा चिद्देवदत्ता-दुत्पत्तिवचन सर्वेषा तत उत्पत्तिप्रदर्शनार्थमिति गम्यते । आ-काशस्यामृतत्ववचन देवादिवच्चिरकालस्थायित्वविषयमिस-भिप्रायः ॥

## एतेन मातरिश्वा व्याख्यातः ॥८ ॥

अनेनैव न्यायेन मातरिश्वनोऽप्युत्पत्तिरुक्ता । नाय न्या-यातिदेशः । अधिकाशङ्काभावात् । तत् "तेजोऽतस्तथा ह्याह" इति वायोस्तेजस उत्पत्तिं वक्तुं पृथगुपादानम् ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

तुशब्दोऽवधारणार्थः । सतः परमकारणस्य परस्यैव ब्र-ह्मण उत्पत्त्यसभवः । तद्व्यतिरिक्तस्य कृत्स्नस्य एकविज्ञा-नेन सर्वविज्ञानप्रतिज्ञाद्यनुपपत्तेः सभव उक्त इत्यभिप्रायः ॥

( तेजोऽधिकरणम् । )

## तेजोऽतस्तथा ह्याह ॥ १० ॥

आकाशाद्वायुरित्यादिव्यवहितकार्याणि किं स्वानन्त-रादाकाशादेः "केवलादुत्पद्यन्त उत तच्छरीरात्परस्माद्ब्र-ह्मण" इति संशयः ॥ स्वानन्तरादेवेति पूर्वः पक्षः । "आकाशा-द्वायुर्वायोरग्निः" इति तस्मात्केवलादेवोत्पत्तिश्रवणात् । "ए-तस्माज्जायते प्राणः" इति परस्माद्ब्रह्मणः सर्वस्योत्पत्तिवा-

दः परम्परयोऽप्युपपद्यते ॥ राद्धान्तस्तु—"तत्तेज ऐक्षत बहुस्यां प्रजायेयेति ता आप ऐक्षन्त" इति बहुभवनसंकल्पपूर्वकसृष्ट्युपदेशात्केवलस्यैतादृशसङ्कल्पानुपपत्तेः "यस्तेजसि तिष्ठन्यस्य तेजः शरीरम्—यस्याकाशः शरीरम्" इति सर्वेषां परब्रह्मशरीरत्वश्रवणाच्च तत्तच्छब्दवाच्यात्परस्माद्ब्रह्मण एव साक्षात्तेजःप्रभृतीनामपि सृष्टिः ॥ सूत्रार्थस्तु—अतो वायोरेव केवलादुत्पद्यते तेजः। तथा ह्याह "वायोरग्निः" इति ॥

आपः ॥ ११ ॥

अतस्तथाह्यहेति वर्तते। अतस्तेजस एव केवलादाप उत्पद्यन्ते। "तदपोऽसृजत" इति ह्याह ॥

पृथिवी ॥ १२ ॥

एवं पृथिव्यद्भ्य उत्पद्यते। "ता अन्नमसृजन्त" इति ह्याह॥

अन्नशब्देन कथं पृथिव्यभिधीयत इत्यत्राह—

अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥

अन्नशब्देन पृथिव्युच्यते। महाभूतसृष्ट्यधिकारात्प्रश्नादपि महाभूतरूपकीर्तने "यत्कृष्णं तदन्नस्य" इति रूपकीर्तनात्। समानप्रकरणे "अद्भ्यः पृथिवी" इति पृथिवीशब्दस्य श्रवणाच्च ॥

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः। न तेजःप्रभृतयः केवलाः स्वानन्तराणां कार्याणां कारणानि। अपि तु तच्छरीरः परमात्मैव। कुतः। परमात्मसृष्टिलिङ्गात्तथाविधाभिध्यानात्। यथैव हि "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" इति, तथा, त-

तेज ऐक्षत बहुस्यां प्रजायेय" इति बहुभवनसङ्कल्परूपाभिध्यानं दृश्यते । ईदृशमभिध्यानं परमात्मन एव हि सम्भवति ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १५ ॥

"आकाशाद्वायुः, वायोरग्निः" इति पारम्पर्यक्रमाद्विपर्ययेण "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि" इति सर्वेषां ब्रह्मानन्तर्यरूपो यः क्रमः स चात एव तच्छरीराद्ब्रह्मणः सृष्टेरुपपद्यते ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥

विज्ञानसा मनस्त्वेनेन्द्रियाणि प्राणश्च विज्ञानमित्युच्यन्ते । "एतस्माज्जायते प्राणः" इत्येतद्वाक्यमाकाशतन्मात्रपञ्चकयोरन्तराले विज्ञानमनसी क्रमेणोत्पद्येते इत्येतत्परम् । विज्ञानमनसी इति प्राणस्यापि प्रदर्शनार्थम् । "पृथिव्यप्सु प्रलीयते" इत्यारभ्य "वायुराकाशे प्रलीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ" इति प्रलयक्रमप्रत्यभिज्ञानात्तल्लिङ्गादतो न श्रुत्यन्तरविरुद्धत्वात्साक्षाद्ब्रह्मणः सर्वेषां सृष्टिपरमिदं वाक्यमपि तु श्रुत्यन्तराविरुद्धपारम्पर्यक्रमपरमितिचेत्परिहरति । नाविशेषात् । भूततन्मात्रान्तराले विज्ञानमनसोरुत्पत्तावपि तत्तच्छरीरकब्रह्माभिधायित्वाद्भूतेन्द्रियमनःप्राणशब्दानां सर्वेषां साक्षादुत्पत्त्यविशेषात्तत्परमेवेदं वाक्यम् ॥

लोके तत्तद्वस्तुवाचितया प्रसिद्धस्य शब्दजातस्य ब्रह्मणि वृत्तिरमुख्येत्याशङ्क्याह–

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ १७ ॥

तुशब्दः शङ्कानिवृत्त्यर्थः । स्थावरजङ्गमवस्तुव्यपाश्रयस्तद्व्यपदेशस्तद्वाचिशब्दो ब्रह्मण्यभाक्तो मुख्य एव । कुतः । तद्भावभावित्वात् तेजः प्रभृतिष्वात्मतया ब्रह्मभावभावित्वेन तेजोऽन्नादिशब्दानां वाचकभावस्य । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकस्यैव तेजःप्रभृतिरूपवस्तुत्वमभाक्तत्वं च । अतः सर्वेऽपि तस्यैव वाचकाः । आत्मतया ब्रह्मभावभावित्वेन तत्प्रकारत्वात्तद्वाचिनां शब्दानां तत्रैव पर्यवसानात् । प्रकारवाचिनां हि शब्दानां प्रकारिणि पर्यवसायित्वेनाभाक्तत्वं गवादिशब्देषु सिद्धम् ॥

(आत्माधिकरणम् ।)

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

किमात्मोत्पद्यते नेति संशयः ॥ उत्पद्यत इति पूर्वः पक्षः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादेः । "तोयेन जीवान्व्यससर्ज भूम्याम् । प्रजापतिः प्रजा असृजत" इत्यादिसृष्टिवचनाच्च । नित्यत्वादिश्रुतिराकाशाद्यमृतत्ववचनवन्नेया ॥ राद्धान्तस्तु—नात्मोत्पद्यते । अनुत्पत्तिश्रुतेः "न जायते म्रियते वा विपश्चित्" इति जीवोत्पत्तिः प्रतिषिध्यते । अतो नित्यः । "नित्यो नित्यानां" इत्यादिश्रुतिभ्यो नित्यत्वावगमात् । जीवोत्पत्तिपक्षेऽकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । वैषम्यनैर्घृण्यप्रसङ्गाच्च । जीवस्य सृष्टिवचनं भोक्तृत्वानुगुणज्ञानप्रकाशाभिप्रायम् । सृष्टेः प्रागविभागवचनं नामरूपविभागाभावादुपपद्यत एव ॥ सूत्रमपि व्याख्यातम् ॥

(ज्ञाधिकरणम् ।)

## ज्ञोऽत एव ॥ १९ ॥

किं जीवः चैतन्यमात्रवपुरुत जडस्वरूप एवागन्तुकचैतन्यगुण उत ज्ञातृत्वैकस्वरूप इति संशयः ॥ चैतन्यमात्रवपुरिति प्रथमः पक्षः । "विज्ञानं यज्ञं तनुते । यो विज्ञाने तिष्ठन् । ज्ञानस्वरूपमत्यन्तनिर्मलम्" इत्यादिश्रुतिस्मृतिभ्यः ॥ द्वितीयस्तु—सुषुप्तिमूर्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रतोऽपीन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वाच्चैतन्यस्य "न प्रेत्य संज्ञाऽस्ति" इति मुक्तस्य चैतन्यप्रतिषेधाच्च पाषाणकल्प एवागन्तुकचैतन्यगुणः । सर्वत्र कार्योपलब्धेः सर्वत्र सन्निधानाच्छरीरगमनेनैव कार्यसंभवे गतिकल्पनायोगात्सर्वगतश्चेति ॥ राद्धान्तस्तु—" अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान्कामान्पश्यन्रमते । न पश्यो मृत्युं पश्यति, सर्वं ह पश्यः पश्यति । द्रष्टा श्रोताऽऽघ्राता रसयिता" इत्यादिश्रुतिभ्यो बद्धमुक्तोभयावस्थो ज्ञातैवात्मा । ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य प्रधानगुणत्वात्स्वरूपानुबन्धित्वेन स्वरूपनिरूपकगुणत्वाज्ज्ञानवत्स्वयं प्रकाशत्वाद्वोपपद्यते । सुषुप्तिमूर्छादौ सदेव ज्ञानं कर्मणा संकुचितमनभिव्यक्तमपि जागरादौ विकासितमभिव्यज्यत इति न विरोधः । " न प्रेत्य संज्ञाऽस्ति " इति सांसारिकभेदाद्यस्मरणविषयम् । " नोपजनं स्मरन्निदं शरीरम् " इत्यादिनैकार्थ्यात् । सर्वगतत्वम् चाणुत्वादिश्रुतेर्विरुद्धम् ॥ सूत्रार्थस्तु—ज्ञोऽत एव । अतः श्रुतेर्ज्ञातैव ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥

श्रुतेरिति वर्तते । " तेन प्रद्योतेनैष आत्मा निष्क्रामति । ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ।

तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इत्याद्युत्क्रान्तिगत्याग
तीनां श्रुतेरणुर्जीवः॥

स्वात्मना चोत्तरयोः॥ २१॥

चशब्दोऽवधारणार्थः। यद्यप्युत्क्रान्तौ स्थितस्य शरीर-
विश्लेषणं कथं चित्सम्पाद्यमस्ति। उत्तरयोर्गमनागमनयोः
स्वात्मनैव सम्पाद्यत्वमवश्याभ्युपेयम्॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्॥ २२॥

"योऽयं विज्ञानमयः" इति जीवं प्रस्तुत्य "स वा एष
महानज आत्मा" इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न। इतरा-
धिकारात् जीवेतरपरमात्माधिकारात्। "यस्यानुवित्तः प्र-
तिबुद्ध आत्मा" इति हि मध्ये परमात्मा प्रस्तुतः॥

स्वशब्दोन्मानाभ्यां च॥ २३॥

"एषोऽणुरात्मा—यस्मिन्प्राणः पञ्चधा संविवेश" इति सा-
क्षादणुशब्दादुन्मानाच्चाणुरेव। उन्मानमुद्धृत्यमानम्। "आरा-
ग्रमात्रो ह्यवरोऽपि" इत्याराग्रमुद्धृत्य तन्मानत्वं हि जीवस्य श्रूयते॥

आत्मनोऽणुपरिमाणत्वे सकलदेहव्यापिवेदनाद्यनुभवः क-
थमित्यत्र मतान्तरेण परिहारमाह—

अविरोधश्चन्दनवत्॥ २४॥

यथा हरिचन्दनबिन्दुर्देहैकदेशवर्त्यपि सकलदेहवर्तिनमा-
ह्लादं जनयति तद्वदविरोधः॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमा-
न्हृदि हि॥ २५॥

चन्दनबिन्दोर्देहैकदेशविशेषस्थित्यपेक्षस्तथाभावः, आत्मनस्तु न तथेति चेन्न। आत्मनोऽपि तथा भावाभ्युपगमात्। हृदि ह्ययमात्मा स्थित इति श्रूयते "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इत्यादौ ॥

गुणाद्वाऽऽलोकवत् ॥ २६ ॥

वाशब्दो मतान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः। यथा द्युमणिमणिप्रभृतीनामेकदेशवर्तिनामालोकस्तद्गुणोऽनेकदेशव्यापी दृश्यते ॥

"विज्ञानं यज्ञं तनुते" इत्यादौ ज्ञानमेवात्मेति व्यपदिश्यते तत्परिहर्तव्य तत्राह—

व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥

जानामीत्यात्मगुणत्वेन प्रतीतिव्यतिरेकोऽभ्युपगमनीयः। यथा गन्धवती पृथिवीत्युपलब्धौ गन्धस्तद्गुणस्तद्व्यतिरिक्तः। दर्शयति च श्रुतिः "जानात्येवायं पुरुषः" इति ॥

पृथगुपदेशात् ॥ २८ ॥

न केवलं जानामीति पृथगुपलब्धिमात्रम्। आत्मनः पृथक्त्वेनोपदिश्यते ज्ञानम्। "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति ॥

विज्ञानमात्मेति व्यपदेशः कथमुपपद्यत इत्यत्राह—

तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः। यथा प्राज्ञः "ब्रह्मणा विपश्चिता। यः सर्वज्ञः सर्ववित्" इति सर्वज्ञ एव ज्ञानगुणसारत्वात् "सत्यं ज्ञानम्" इति व्यपदिश्यते ॥

यावदात्मभावित्वाच्च न दोषस्तद्द-
र्शनात् ॥ ३० ॥

ज्ञानस्य यावदात्मस्वरूपभावित्वाच्च तेन तद्व्यपदेशो न दोषः। खण्डादिषु तथा दर्शनात्। खण्डादिषु यावत्स्वरूपभाविधर्मत्वेऽपि हिगोत्वस्य गौरित्येव व्यपदेशो दृश्यते। चकारादात्मनोऽपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशो न दोष इत्युच्यते॥

सुषुप्त्यादिषु ज्ञानस्यानुपलब्धेर्न यावदात्मभावित्वमित्याशंक्याह—

पुंस्त्वादिवत्त्वस्य सतो हि व्यक्तियोगात् ॥ ३० ॥

तुशब्दः शङ्काव्यावृत्त्यर्थः। सुषुप्त्यादिष्वपि सतो ज्ञानस्यानभिव्यक्तस्य जागरादिष्वभिव्यक्तिसंभवाद्यावदात्मभावि ज्ञानम्। पुंस्त्वादिवत्। पुंस्त्वमिति पुंस्त्वासाधारणधातुरुच्यते। यथा सप्तधातुत्वेन शरीरस्य बाल्येऽपि सतोऽनभिव्यक्तस्य सप्तमधातोर्युवत्वेऽभिव्यक्तिः॥

एवमात्मनो ज्ञातृत्वमणुत्वं चोक्त्वा पक्षान्तरे दोषमाह—

नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो
वाऽन्यथा ॥ ३२ ॥

अन्यथा ज्ञानात्मवादे सर्वगतात्मवादे चोपलब्ध्यनुपलब्धी नित्यत्वमज्येयाताम्। उपलब्ध्यनुपलब्ध्योरन्यतरनियमो वा। ज्ञानात्मवादे तावज्ज्ञानस्य स्वप्रकाशस्वभावत्वात्प्रकाशपर्यायोपलब्धेर्नित्यत्वमपरिहार्या। ज्ञाने विद्यमाने सति हेत्वन्तरेणानुपलब्धिजननायोगात् ज्ञानमेवानुपलब्धेरपि हेतुरित्यास्थेयम्। ज्ञानस्य सर्वदा वर्तमानत्वात्सर्वदोभयप्र-

सक्तिः। अथ युगपद्विरुद्धकार्यजननायोगात् ज्ञान उपलब्ध्यनुपलब्ध्योरन्यतरहेतुरास्थीयते तदाऽऽन्यतरनियमः स्यात्। सर्वगतत्वपक्षे ज्ञानात्मवादिनस्तथैव हेतुः। जन्यज्ञानवादिनोऽपि सर्वेषामात्मनां सर्वगतत्वे सर्वस्यात्मनः संयोगादेर्हेतोः सर्वेषामुक्तरीत्या तथैवमसक्तिः। अदृष्टोत्पत्तिहेतोरपि सर्वसाधारण्यत्वाददृष्टेनापि नाव्यवस्था॥

(कर्त्रधिकरणम्।)

कर्ता शास्त्रार्थवत्त्वात्॥ ३३॥

आत्मनो ज्ञातृत्ववत्कर्तृत्वमप्यस्ति नेति संशयः। प्रधानस्यैव कर्तृत्वादात्मनो न कर्तृत्वमस्तीति पूर्वः पक्षः। "अहंकारविमूढात्मा कर्ताऽहमिति मन्यते। नान्यं गुणेभ्यः कर्तारं" इत्यादिषु गुणानामेव कर्तृत्ववचनात्॥ राद्धान्तस्तु—स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्तैवात्मा। बोद्धुरेव हि शासनं नाचेतनस्य प्रधानस्य। "यजेत उपासीत"इति कर्तरि लकारः। अतः कर्तारमेव बोधयति शास्त्रम्॥ सूत्रमपि व्याख्यातम्॥

उपादानाद्विहारोपदेशाच्च॥ ३४॥

उपादानादुपदिश्यमानाद्विहारोपदेशाच्च। उपदिश्यते ह्युपादानं विहारश्च "एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथा कामं परिवर्तते" इति। उपादानविहारयोः कर्तृत्वोपदेशाच्च कर्ता॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥ ३५॥

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति यज्ञादि-

कर्मत्वात्मनः कर्तृत्वव्यपदेशाच्च कर्ता । विज्ञानशब्देन नात्मनो व्यपदेशोऽपि त्वन्तः करणरूपबुद्धेरेवेति चेत्तथा सति विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥

उपलब्धिवदनियमः ॥ ३६ ॥

प्रधानस्य कर्तृत्वेनात्मनो भोक्तृत्वमेवेति पक्षे पूर्वोक्तोपलब्ध्यनियमवत्प्रधानस्य सर्वसाधारणत्वाद्भोक्तृत्वानियमः । अन्तःकरणभेदेऽपि सर्वेषामात्मनां सर्वगतत्वेन साधारण्यमनिवार्यम् ॥

शक्तिविपर्ययात् ॥ ३७ ॥

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वायोगाद्भोक्तृत्वशक्तिरपि बुद्धेरेवात्मनो भोक्तृत्वशक्तिविपर्ययो हानिरित्यर्थः ॥

समाध्यभावाच्च ॥ ३८ ॥

प्रकृतेः कर्तृत्वे मोक्षसाधनभूतसमाध्यभावश्च स्यात् । प्रकृतेरन्योऽस्मीति समाधौ प्रकृतेः कर्तृत्वायोगात् ॥

यथा च तक्षोभयथा ॥ ३९ ॥

आत्मनः कर्तृत्वे हि भोगवाञ्छायां करोति अन्यथा न करोतीत्युभयप्रकारव्यवस्थोपपद्यते । यथा तक्षा स्वकार्ये इच्छया व्यवस्थितः। बुद्धेः कर्तृत्वे तस्या इच्छाया अभावाद्व्यवस्था न सिध्यतीत्यभिप्रायः ॥

( परायत्ताधिकरणम् । )

परात्तु तच्छ्रुतेः ॥ ४० ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्या
दिभ्यः ॥ ४१ ॥

जीवस्य कर्तृत्वं किं परमात्मायत्तमुत स्वायत्तमिति संशयः ॥ स्वायत्तमिति पूर्वः पक्षः। विधिनिषेधशास्त्रानर्थक्यप्रसक्तेः। यः स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिसक्तः स एव हि नियोज्यो निग्रहानुग्रहास्पदं च भवति ॥ राद्धान्तस्तु—"अन्तः प्रविष्टः शास्ता जननां सर्वात्मा। य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः परमात्मायत्तमेव कर्तृत्वम्। तच्च जीवेन स्वबुद्ध्या कृतं प्रयत्नमपेक्ष्य तदनुमतिदानेनेति विधिनिषेधाद्यवैयर्थ्यम्। अत एव निग्रहानुग्रहास्पदं च जीव इति ॥ सूत्रद्वयमपि व्याख्यातम् ॥

( अंशाधिकरणम्। )

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके ॥ ४२ ॥

किं जीवः परमात्मनोऽत्यन्तभिन्नः उत परमात्मैवाज्ञः अथ परमात्मैवोपाधिसंबद्धः परमात्मांशो वेति संशयः ॥ अत्यन्तभिन्न इति प्रथमः पक्षः। "पृथगात्मानं प्रेरितारं च मत्वा। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति।अनीशश्चात्मा बध्यते भोक्तृभावात् । सर्वस्य वशी सर्वस्येशानः" इत्यादिभेदश्रुतेर्जीवपरमात्मनोः कर्मपरतन्त्रतातद्विपरीतत्वश्रुतेश्च। अभेदश्रुतयो नरपतिरेव सर्वलोक इतिवदौपचारिका इति ॥ भेदश्रुतीनामविद्याविषयतयोपाधिसंबंधविषयतया वा मुख्यवृत्तिसंभवात् अभेदश्रुतिमुख्यत्वायाज्ञः परमात्मा उपाधिसंबद्धो वा जीव इति युक्तम्॥ राद्धान्तस्तु—नानात्वैकत्वव्यपदेशात्परमात्मनः सत्यसङ्कल्पत्वसर्वज्ञत्वनिरवद्यत्वश्रुतेरज्ञत्वोपाधिसंबन्धाद्यनुपपत्तेर्जीवशब्दस्य जीवशरीरकपरमात्मवाचित्वेन "तत्त्वमसि।अयमात्मा ब्रह्म" इति सामानाधि-

करणस्य मुख्यत्वात्, शरीरशरीरिणोर्विशेषणविशेष्यभूतयोः स्वरूपस्वभावभेदेन च भेदश्रुतेश्च मुख्यत्वात् विशिष्टवस्त्वेकदेशतया च विशेषणस्य परमात्मांशो जीवः। नानाव्यपदेशादभेदव्यपदेशादन्यथा च भेदव्यपदेशाच्च। उक्तरीत्योभयमुख्यत्वमित्यभिप्रायः। "ब्रह्म दाशा ब्रह्म दासाः" इत्यादिदाशकितवादित्वमप्यधीयत एके शाखिनः। सर्वजीवव्यापित्वादभेदोपदेशस्य तत्रात्यादरः प्रतीयत इत्यर्थः॥

मन्त्रवर्णात्॥ ४३॥

मन्त्रवर्णाच्चांश एव जीवः "पादोऽस्य विश्वा भूतानि" इति। पादशब्दोऽशवाची।

अपि स्मर्यते॥ ४४॥

"ममैवांशो जीवलोके जीवभूतः सनातनः" इति जीवस्य परमात्मांशत्वं स्मर्यते च॥

एकद्रव्यैकदेशत्वं ह्यंशत्वं, अतो जीवस्य ब्रह्मैकदेशत्वेन जीवदोषा ब्रह्मदोषा एवेत्याशङ्क्याह—

प्रकाशादिवत्तु नैवं परः॥ ४५॥

तुशब्दः शङ्कानिवृत्त्यर्थः। प्रकाशवतां मणिद्युमणिप्रभृतीनां विशिष्टानां विशेषणभूतः प्रकाशो यथांशः तद्वज्जीवशरीरतया जीवविशिष्टस्य ब्रह्मणोंशो जीवः। विशिष्टवस्त्वेकदेशतया विशेषणस्य विशेषणं विशिष्टांशः। आदिशब्दात् द्रव्यविशेषणतैकस्वभावजातिगुणशरीराणि गृह्यन्ते। विशेषणविशेष्ययोः स्वरूपस्वभावभेदाद्विशेषणभूतो जीवो यत्स्वरूपो

यत्स्वभावश्च नैवं परः सर्वज्ञः सत्यसङ्कल्पो निरवद्य-श्चेत्यर्थः ॥

स्मरन्ति च ॥ ४६ ॥

प्रकाशादिवज्जीवस्यांशत्वं पराशरादयः स्मरन्ति च—

"एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।

परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥"

तथा परं प्रति शरीरत्वं च—

यत्किंचित्सृज्यते येन सत्त्वजातेन वै द्विज ।

तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः ॥" इति ॥

ब्रह्मांशत्वेन च सर्वेषामात्मनां समत्वाद्वेदाध्ययनादौ केषांचिदनुज्ञा केषांचित्परिहारश्च कथमुपपद्यते तत्राह—

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरा-

दिवत् ॥ ४७ ॥

ब्राह्मणादिशुच्यशुचिदेहसंबन्धादनुज्ञापरिहारावुपपद्येते । यथा ज्योतिषोऽग्नेरन्नस्य च शुच्यशुचिदेहसंबन्धादनुज्ञापरिहारौ तद्वत् (यथा श्रोत्रियागाराद्ग्निराह्रियते, श्मशानादेस्तु परिह्रियते, यथा चान्नादिः श्रोत्रियादेरनुज्ञायते, अभिशस्तादेश्च परिह्रियते ॥

असन्ततेश्चाव्यतिकरः ॥ ४८ ॥

जीवात्मनः प्रतिशरीरं भिन्नत्वादणुत्वेन तत्र तत्रावच्छिन्नत्वाच्च भोगाव्यतिकरः । अज्ञब्रह्मजीववादे उपाधिसंबन्धिब्रह्मजीववादे चाज्ञानसंबन्ध्युपाधिसंबन्धि च ब्रह्मैवेति भोगव्यवस्था न सिध्यतीत्यभिप्रायः॥

आभासा एव च ॥ ४९ ॥

अज्ञब्रह्मजीववादे सर्वज्ञस्य ब्रह्मणोऽज्ञानकल्पनात्स्वरूपतिरोधानकल्पनाद्धेतव आभासा एव। चकारान्निरवद्यत्वादि श्रुतिविरोधश्च ॥

पारमार्थिकोपाधिसंबन्धिब्रह्मजीववादे अनाद्यदृष्टप्रवाहेणोपाधिप्रवाहानादित्वात्तत्संबन्धिनि ये दोषा न ते ब्रह्मणि प्रसज्यन्त इत्यत आह—

अदृष्टानियमात् ॥ ५० ॥

अदृष्टैस्तत्कृतोपाधिभिश्च ब्रह्मणश्छेदासंभवात्तत्कृता दोषा ब्रह्मणि भवेयुः ॥

अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसंध्यादिष्वप्युपाधिब्रह्मव्यतिरिक्तवस्त्वंतराभावात्पूर्वोपाधियुक्तं ब्रह्मैवेति न कश्चिद्विशेषः ॥

प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५२ ॥

उपाधिसंबन्धिब्रह्मप्रदेशादनुपहितब्रह्मप्रदेशो भिद्यतेऽतो व्यवस्थेति चेन्न। उपाधिषु गच्छत्सु पूर्वमनुपहितब्रह्मप्रदेशस्यान्तर्भावात् ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
द्वितीयस्याध्यायस्य तृतीयः पादः।

---

( प्राणोत्पत्त्यधिकरणम्। )

तथा प्राणाः ॥ १ ॥

किं जीववदिन्द्रियाण्यपि नोत्पद्यन्त उत वियदादिवदुत्प-

द्यन्त इति संशयः ॥ नोत्पद्यन्त इति पूर्वः पक्षः । प्रलयकालेऽवस्थानश्रुतेःउत्पत्तिवादा जीवोत्पत्तिवदवज्ञेयाः। "असद्वा इदमग्र आसीत्—ऋषयो वा व तेऽग्रे सदासीत्—प्राणा वा ऋषयः" इति हीन्द्रियाणां तदानीं स्थितिः श्रूयते ॥ राद्धान्तस्तु—प्राक्सृष्टेरेकत्वावधारणात् इन्द्रियाणाम् " एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च " इत्युत्पत्तिश्रुतेरुत्पत्तिनिषेधनिशत्ववचनाभावाच्च वियदादिवदुत्पद्यन्ते। " प्राणा वा ऋषयः " इति प्राणशब्दनिर्दिष्टः परमात्माऽभिधीयते ॥ सूत्रार्थः—तथा प्राणाः। यथा जीवा नोत्पद्यन्ते तथैवेन्द्रियाण्यपि ॥

गौण्यसंभवात्तत्प्राक्श्रुतेश्च ॥ २ ॥

घस्त्वर्थः। तुशब्दात्पक्षो व्यावृत्तः। इन्द्रियाण्युत्पद्यन्त एव। कुतः। तत्प्राक्श्रुतेः। तस्य परमात्मन एव प्रागवस्थानश्रुतेः" सदेव सोम्येदमग्र आसीत् । आत्मा वा इदमेक एवाग्र आसीत् । एको ह वै नारायणः आसीत्" इति। प्राणशब्दस्य "प्राणमभिसंविशन्ति " इति परमात्मन्यपि प्रसिद्धेः । ऋषित्वं हि द्रष्टृत्वम्। तच्च तस्यैव संभवति। बहुत्वासंभवाद्बहुवचनश्रुतिर्गौणी। एवं प्रागवस्थानासंभवात् ॥

तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

इतश्च । वाचः परमात्मव्यतिरिक्तनामधेयस्य तत्पूर्वकत्वात् तत्तद्वस्तुसृष्टिपूर्वकत्वात्, "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्याम्" इत्यादिश्रुतेः, परमात्मैव तदा प्राणशब्दनिर्दिष्टः ॥

( सप्तगत्यधिकरणम् । )

सप्त गतेर्विशेषितत्वाच्च ॥ ४ ॥

किमिन्द्रियाणि सप्तैवोत एकादशेति संशयः॥ सप्तैवेति पूर्वः पक्षः। "सप्त प्राणाः प्रभवंति" इत्यादिषु सप्तानामेव जीवेन सह संचारश्रवणात् "यदा पञ्चावतिष्ठंते ज्ञानानि मनसा सह। बुद्धिश्च" इति सप्तानामेव योगकाले ज्ञानानीति विशेषितत्वाच्च श्रोत्रादीनि ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति सप्तैव। राद्धांतस्तु—श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि च कर्मेन्द्रियाणि मन इत्येकादश। वाग्यस्तादीनामपि श्रोत्रादिवत्कार्यभेदेन जीवोपकरणत्वाविशेषात्। "दशेमे पुरुषे प्राणा आत्मैकादशः। इन्द्रियाणि दशैकं च" इत्यादिश्रुतिस्मृतिभ्यश्च। वागादीनां जीवेन सह गमनाभावात् सप्तानामेव गतिश्रवणम्। योगकाले विशेषणं च ज्ञानेन्द्रियाणां मनसस्तद्वृत्तिरूपबुद्धेश्च प्राधान्यात्॥ सूत्रार्थः—सप्तानामेव गतिश्रवणात् ज्ञानानि पंच मनो बुद्धिश्चेति विशेषितत्वाच्च तानि सप्तैव॥

हस्तादयस्तु स्थितेऽतो नैवम्॥ ५॥

नैवं न सप्तैवेंद्रियाणीत्यर्थः। श्रोत्रादीनि ज्ञानेन्द्रियाणि पंच हस्तादीनि च कर्मेन्द्रियाणि पंच मन इत्येकादश। तत्र श्रोत्रादीनि जीवेन सह शरीरांतरगमनेऽपि गच्छंति। वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारीणि। अतो नैवमित्यन्वयः। जीवे देहान्तरवस्थिते एषां जीवोपकारकत्वाविशेषात् "दशेमे पुरुषे प्राणा आत्मैकादशः" इत्यादिवचनाचेत्यभिप्रायः। आत्मशब्दो मनोवाची। इतोऽधिकव्यपदेशो मनोवृत्तिभेदविषयः॥

(प्राणाणुत्वाधिकरणम्।)

अणवश्च॥ ६॥

इन्द्रियाणि किं सर्वगतान्युताणुपरिमाणानीति संशयः ॥ सर्वगतानीति पूर्वः पक्षः । " त एते सर्व एव समाः सर्वेऽनन्ताः " इति प्राणानामानन्त्यश्रवणात् ॥ राद्धान्तस्तु-" प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति " इति प्राणानामुत्क्रान्तिश्रवणात्परिमितत्वे ससमत्पक्षत्वादणवः । आनन्त्यश्रुतिस्तु " अथ यो ह वै ताननन्तानुपास्ते " इत्युपासनविधानादुपासनफलबाहुल्यविषया ॥

श्रेष्ठश्च ॥ ७ ॥

श्रेष्ठः प्राण उत्पद्यते । नात्र न्यायातिदेशः । अधिकाशङ्काभावात् । पृथग्योगकरणमुत्तरत्र चिन्तार्थं । श्रेष्ठः पञ्चवृत्तिः प्राणः । श्रेष्ठ्य तु प्राणसंवादे तस्य श्रैष्ठ्याभिधानात् ॥

( वायुक्रियाधिकरणम् । )

न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥

किमयं श्रेष्ठः प्राणो वायुमात्रमुत तत्क्रिया अथ वायुरेव क चन विशेषमापन्न इति संशयः । वायुमात्रमिति प्रथमः पक्षः ।"यः प्राणः स वायुः" इति व्यपदेशात् ॥ वायुमात्रे प्राणप्रसिद्ध्यभावादुच्छ्वासनिःश्वासरूपवायुक्रियाया प्राणप्रसिद्धेः वायोः क्रियाविशेष एव प्राण इति द्वितीयः ॥ राद्धान्तस्तु—न वायुमात्रं तत्क्रियामात्रं वा प्राणः । अपि तु देहधारणयोग्यतारूपविशेषमापन्नो वायुः । " एतस्माज्जायते प्राणः—ख वायुः" इति वायुप्राणयोः पृथगुत्पत्त्युपदेशात् ।क्रियायाश्च पृथगुपदेशो न संभवति। तेजःप्रभृतिष्वदर्शनात्। चक्षुरादिकरणैः सह जीवोपकरणतयोपदेशात् देहेन्द्रियधारणरूपोपकाराधिक्यात् चक्षुरादि-

भ्यः प्राधान्यवचनाच्च न क्रियामात्रम् ॥ सूत्रार्थः—वायुमात्रं तत्क्रिया वा न प्राणः। पृथगुपदेशात्। प्राणो जायते खं वायुः इति हि पृथगुत्पत्तिरुपदिश्यते ॥

वायोः पृथगुपदिष्टतया तस्मादन्योऽयं प्राणः किमग्न्यादिवद्भूतान्तरमित्याशङ्क्याह—

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥

तुशब्दः शङ्कानिवृत्त्यर्थः। प्राणो न भूतान्तरमपि तु वायुरेवावस्थान्तरमापन्नः। चक्षुरादिवज्जीवोपकरणम्। तच्चोपकरणत्वमुपकरणभूतैरिन्द्रियैः सह शिष्ट्यादिभ्योऽवगम्यते। शिष्टिः शासनमुपदेशः। उपदिश्यते हि अयं प्राणश्चक्षुरादिभिः सह प्राणसंवादादिषु। तत्सजातीयत्वे हि तद्युज्यते। प्राणशब्दगृहीतेषु करणेषु अस्य "अथ यो ऽयं मुख्यप्राणः" इति विशेष्याभिधानमादिशब्देनोक्तं। तदपि तत्सजातीयत्वे हि भवति॥

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥

करणं क्रिया। अकरणत्वं क्रियारहितत्वम्। जीवोपकरणभूतस्यास्य प्राणस्य जीवोपकारक्रियारहितत्वेऽपि न दोष उद्भावयितुं शक्यः। यतः श्रुतिरेव तथा दर्शयति उपकारप्रकारं दर्शयति। "यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतरं दर्शयते स वः श्रेष्ठः" इति वागादिमुख्यप्राणपर्यन्तं करणानि प्रत्येकमभिधाय प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात् ॥

प्राणापानादिनामविभाग एक एव प्राण इत्याह—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

प्राणापानादिवृत्तिभेदात्प्राण एव पञ्चधा व्यपदिश्यते। मनोवत् यथैकमेव मनः कामादिवृत्तिभेदेन तैस्तैः शब्दैरभिधीयत इति श्रुतिराह "कामः संकल्पः" इत्यारभ्य " ह्रीर्धीर्भीरित्येतत्सर्वं मन एव " इति । एवं अपानादिसमानपर्यंतान् व्यपदिश्य "एतत्सर्वं प्राण एव" इति व्यपदेशात् प्राण एव पञ्चवृत्तिरिति गम्यते ॥

( श्रेष्ठाणुत्वाधिकरणम् । )

अणुश्च ॥ १२ ॥

किमयं प्राणः सर्वगतोऽथाणुरिति संशयः ॥ सर्वगत इति पूर्वः पक्षः । " स एभिस्त्रिभिर्लोकैः समः " इत्यादिना प्राणस्यानन्त्यव्यपदेशात् ॥ राद्धान्तस्तु-"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति " इत्युत्क्रान्तिवचनादिन्द्रियवत्प्राणश्चाणुः । एवमणुत्वे निश्चिते सर्वस्य प्राणायत्तस्थितित्वेन वैभववादः ॥ सूत्रमपि-व्याख्यातम् ॥

ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥

अग्न्यादीनां जीवस्य चेन्द्रियाधिष्ठानं परमात्मायत्तमिति "परात्तु तच्छ्रुतेः" इत्युक्तमेव स्मारयति विषयव्याप्तिज्ञापनाय। प्राणवता जीवेन सह ज्योतिरादेरग्न्यादेर्वागाद्यधिष्ठानं तदामननाद्भवति । आमननं आभिमुख्येन मननम् । तत्संकल्पादेव भवतीत्यर्थः। "योऽग्नौ तिष्ठन्-अग्निमन्तरो यमयति" इत्यादिशब्दात् ॥

तस्य च नित्यत्वात् ॥ १४ ॥

सर्वेषामात्मतयाऽनुप्रविश्य सर्वनियमनस्य नित्यत्वात्परमात्मनोऽवर्जनीयत्वादित्यर्थः । " तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ॥

( इन्द्रियाधिकरणम् । )

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

किं प्राणशब्दनिर्दिष्टाः सर्वे एवेन्द्रियाणि उत श्रेष्ठव्यतिरिक्ताः प्राणा इति संशयः ॥ सर्वे एवेति पूर्वः पक्षः । सर्वेषामविशेषेण प्राणशब्दनिर्देशात्करणत्वाच्च ॥ राद्धान्तस्तु–श्रेष्ठव्यतिरिक्ताः प्राणा इन्द्रियाणि । तेष्वेव इन्द्रियशब्दनिर्देशात् " इन्द्रियाणि दशैकं च " इत्यादौ । एषामपि प्राणशब्दनिर्देशः प्राणाधीनवृत्तित्वेन । तथा च श्रुतिः "त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेन व्याख्यायन्ते" इति । रूपमभवन् तदधीनवृत्तयोऽभवन् इत्यर्थः ॥ सूत्रार्थः–श्रेष्ठादन्यत्र ये प्राणास्त इन्द्रियाणि तेष्वेव तद्व्यपदेशादिन्द्रियव्यपदेशात् ॥

भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति मनस इन्द्रियेभ्यो भेदेन प्राणस्योत्पत्तिश्रुतेः । इन्द्रियेषूपरतेष्वपि प्राणवृत्तेर्दर्शनेन प्राणवृत्तिवैलक्षण्याच्च ॥

( संज्ञामूर्तिक्लृप्त्यधिकरणम् । )

संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥

किं प्रपञ्चव्यष्टिसृष्टिर्जीवभूताच्चतुर्मुखात् उत तच्छरीर-

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

प्राणापानादिवृत्तिभेदात्प्राण एव पञ्चधा व्यपदिश्यते । मनोवत् यथैकमेव मनः कामादिवृत्तिभेदेन तैस्तैः शब्दैरभिधीयत इति श्रुतिराह "कामः संकल्पः" इत्यारभ्य "ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति । एवं अपानादिसमानपर्यन्तान् व्यपदिश्य "एतत्सर्वं प्राण एव" इति व्यपदेशात् प्राण एव पञ्चवृत्तिरिति गम्यते ॥

( श्रेष्ठाणुत्वाधिकरणम् । )

अणुश्च ॥ १२ ॥

किमयं प्राणः सर्वगतोऽथाणुरिति संशयः ॥ सर्वगत इति पूर्वः पक्षः । "स एभिस्त्रिभिर्लोकैः समः" इत्यादिना प्राणस्यानन्त्यव्यपदेशात् ॥ राद्धान्तस्तु-"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्युत्क्रान्तिवचनादिन्द्रियवत्प्राणश्चाणुः । एवमणुत्वे निश्चिते सर्वस्य प्राणायत्तस्थितित्वेन वैभववादः ॥ सूत्रमपि-व्याख्यातम् ॥

ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥

अग्न्यादीनां जीवस्य चेन्द्रियाधिष्ठानं परमात्मायत्तमिति "परात्तु तच्छ्रुतेः" इत्युक्तमेव स्मारयति विषयव्याप्तिज्ञापनाय। प्राणवता जीवे न सह ज्योतिरादेरग्न्यादेर्वागाद्यधिष्ठानं तदामननाद्भवति । आमननं आभिमुख्येन मननम् । तत्संकल्पादेव भवतीत्यर्थः। "योऽग्नौ तिष्ठन्-अग्निमन्तरो यमयति" इत्यादि-शब्दात् ॥

तस्य च नित्यत्वात् ॥ १४ ॥

सर्वेषामात्मतयाऽनुप्रविश्य सर्वनियमनस्य नित्यत्वात्परमात्मनोऽवर्जनीयत्वादित्यर्थः । " तत्सृष्ट्वा तदेवानुप्राविशत्"इति श्रुतेः ॥

( इन्द्रियाधिकरणम् । )

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

किं प्राणशब्दनिर्दिष्टाः सर्वे एवेन्द्रियाणि उत श्रेष्ठव्यतिरिक्ताः प्राणा इति संशयः ॥ सर्वे एवेति पूर्वः पक्षः । सर्वेषामविशेषेण प्राणशब्दनिर्देशात्करणत्वाच्च ॥ राद्धान्तस्तु—श्रेष्ठव्यतिरिक्ताः प्राणा इन्द्रियाणि । तेष्वेव इन्द्रियशब्दनिर्देशात् " इन्द्रियाणि दशैकं च " इत्यादौ । एषामपि प्राणशब्दनिर्देशः प्राणाधीनवृत्तित्वेन । तथा च श्रुतिः "त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेन व्याख्यायन्ते" इति । रूपमभवन् तदधीनवृत्तयोऽभवन् इत्यर्थः ॥ सूत्रार्थः—श्रेष्ठादन्यत्र ये प्राणास्त इन्द्रियाणि तेष्वेव तद्व्यपदेशादिन्द्रियव्यपदेशात् ॥

भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति मनस इन्द्रियेभ्यो भेदेन प्राणस्योत्पत्तिश्रुतेः । इन्द्रियेषूपरतेष्वपि प्राणवृत्तेर्दर्शनेन प्राणवृत्तिवैलक्षण्याच्च ॥

( संज्ञामूर्तिक्लृप्त्यधिकरणम् । )

संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥१७॥

किं प्रपञ्चव्यष्टिसृष्टिर्जीवभूताच्चतुर्मुखात् उत तच्छरीर-

कात्परमात्मन एवेति संशयः ॥ केवलात् चतुर्मुखादिति पूर्वः पक्षः । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति व्यतिरेकश्रुतेः । जीवस्य परमात्मांशत्वेन "व्याकरवाणि" इत्युत्तमपुरुषनिर्देशोऽपि कथं चिदुपपद्यते ॥ राद्धान्तस्तु—"नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकं करवाणि" इति त्रिवृत्करणं कुर्वत एव नामरूपव्याक्रियोपदेशात्परमात्मन एव नामरूपव्याकरणरूपव्यष्टिसृष्टिः । त्रिवृत्करणं तु न चतुर्मुखेन कर्तुं शक्यम्। अण्डसृष्ट्युत्तरकालभावित्वाच्चतुर्मुखोत्पत्तेः । त्रिवृत्कृतैरेव तेजोऽबन्नैरण्डसृष्टिसंभवाच्च । "तदण्डमभवद्धैमं—तस्मिन् जज्ञे स्वयं ब्रह्मा" इति हि स्मर्यते ।

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषांता ह्यण्डमुत्पादयंति ते ॥" इति ।

अतश्चतुर्मुखशरीरकात्परमात्मन एव व्यष्टि सृष्टिः। एवं सति व्याकरवाणीत्युत्तमपुरुषनिर्देशः समंजसः। अनेन जीवेनेति व्यतिरेकनिर्देशोऽपि जीवशरीरकेणात्मना इत्यन्वयात्समजसः । जीवशब्दस्तेजःप्रभृतिशब्दवज्जीवशरीरकब्रह्मवाचीति युक्तम् । जीवेनात्मनेति सामानाधिकरण्यं च मुख्यम् । "प्रविश्य नामरूपे व्याकरवाणि" इति समानकर्तृकत्वनिर्देशश्च मुख्यः॥ सूत्रार्थः—तुशब्दः पक्षव्यावृत्त्यर्थः । नामरूपक्लृप्तिः परमात्मन एव । कुतः । त्रिवृत्करणं कुर्वत एव नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं तु परमात्मन एव कर्मेत्युक्तम् ॥

" अन्नमशितं त्रेधा विधीयते " इत्यादिना चतुर्मुखसृष्टत्र-स्तुपु त्रिवृत्करणप्रकारो ह्युपादिश्यते अतश्चतुर्मुखेन केवलेन तच्छक्यमित्याशंक्याह—

मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥

" तासां त्रिवृतं त्रिवृतमेकैकां करवाणि " इति निर्दिष्टं त्रिवृत्करणं "अन्नमशितं त्रेधा विधीयते " इत्यादिना नोपादिश्यते। " तस्य यः स्थविष्ठो धातुस्तत्पुरीषं यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" इति मांसाद्यपि हि भौममेवोपदिश्यते। "अन्नमशितं त्रेधा" इति प्रक्रमात् "अन्नमयं हि सोम्य मनः" इति वाक्यशेषाच्च। तेजोऽबन्नानां त्रिवृत्करणप्रकारे ह्युपादिश्यमाने मांसमनसोः पुरीषाद्वैमात्रदणुत्वेनाणीयस्त्वेनाप्यत्वं तैजसत्वं च प्रसज्यत। तथेतरयोरपि पर्याययोः "आपः पीताः तेजो ऽशितम्" इति पर्याययोस्त्रयाणां त्रयाणां भागानां यथाशब्दमाप्यत्वं तैजसत्वमेवोपदिश्यते। तत्रापि ह्यापः पीताः। तेजोऽशितमिति हि प्रक्रमः। पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणा अब्विकाराः, अस्थिमज्जावाचस्तेजोविकारा इति प्रतिपत्तव्यम्। वाक्यशेषोऽपि "आपोमयः प्राणः तेजोमयी वाक्" इति। प्रागुक्तत्रिवृत्करणप्रकारे हि मूत्रप्राणयोः स्थविष्ठत्वाणीयस्त्वाभ्यां भौमत्वतैजसत्वप्रसक्तिः। तेजोऽशितमित्यत्रापि पूर्वयोर्भौमत्वाप्यत्वापत्तिः। अतोऽत्र प्रागेव त्रिवृत्कृतस्यान्नादेः तस्यैव त्रेधा परिणाम उपादिश्यते। "तस्य यः स्थविष्ठो भागस्तत्पुरीषमथ यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः " इति मांसाद्यपि भौममेवोपादिश्यते ॥

प्रागेव त्रिवृत्कृतं चेत्कथं केवलान्नादिशब्दैरुच्यत इत्यत्राह—

वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

वैरूप्यं विशेषभावः । विभुत्वेऽप्येकस्मिन् तत्र तत्राशा-पाधिकरणरूपविशेषभावादस्मादेवादः । द्विरुक्तिरध्यायपरिसमा-प्तिद्योतनार्था ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे द्वितीयस्याध्या-यस्य चतुर्थः पादः । समाप्तोऽध्यायः ॥

---

# वेदान्तदीपे

---

तृतीयोऽध्यायः ।

( तदन्तरप्रतिपत्त्यधिकरणम् । )

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

देही देहान्तरगमने देहकारणभूतैर्भूतसूक्ष्मैः संयुक्तो गच्छति नेति संशयः ॥ न संयुक्तो गच्छतीति पूर्वः पक्षः । देहारंभाय तत्र भूतसूक्ष्मणां सुलभत्वात् ॥ राद्धान्तस्तु—पञ्चाग्निविद्यायाम् "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति । इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नप्रतिवचनाभ्यामद्भिर्भूतान्तरसंसृष्टाभिः सह जीवस्य गमनं प्रतीयते इति भूतसूक्ष्मैः सहैव गच्छति ॥ सूत्रार्थस्तु—तदन्तरप्रतिपत्तौ संज्ञामूर्तिक्लृप्तिरित्यत्र मूर्तिशब्देन देहः प्रस्तुत इतितच्छब्देन देहः परामृश्यते । तदन्तरप्रतिपत्तौ देहान्तरगमने रंहति संपरिष्वक्तः जीवो भूतसूक्ष्मैः संपरिष्वक्तो गच्छति । कुतः । प्रश्ननिरूपणाभ्याम् "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति । इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति हि प्रश्नप्रतिवचने । देहारंभिका आपः त्रिवृत्करणेन भूतान्तरसंसृष्टा द्युपर्जन्यपृथिवीपुरुषाग्निषु जीवेन सह प्रविष्टाः पञ्चम्यामाहुतौ योषिदग्निप्रवेशवेलायां पुरुषशब्दाभिलपनीया भ-

यान्ति। पुरुषाकारतां भजन्त इत्यर्थः। अतो जीवेन सह गमनं प्रतीयते॥

कथमप्छब्देन सर्वेषामभिधानमित्याशङ्क्याह—

त्र्यात्मकत्वात्तु भूयस्त्वात्॥ २॥

तुशब्दः शङ्काव्यावृत्त्यर्थः। अपां त्रिवृत्करणेन त्र्यात्मकत्वादाप इति भूतान्तरसंसृष्टा अपोऽभिधीयन्ते। अपां भूयस्त्वादाधिक्याद्वच्छब्देनाभिधानम्॥

प्राणगतेश्च॥ ३॥

इतश्च भूतसूक्ष्मैः संयुक्तो याति। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति प्राणानामिन्द्रियाणां जीवेन सह गमनश्रुतेः, इन्द्रियाणां देहाश्रयत्वेन देहोऽपि सूक्ष्मरूपेण गच्छतीति गम्यते। स्मर्यते च "मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि" इत्यादिना। न च निराश्रयाणां गतिरुपपद्यते इति तदाश्रयाणां भूतसूक्ष्माणां गतिरभ्युपगन्तव्या॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ४॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" इति मरणवेलायां वागादीनामग्न्यादिष्वप्ययश्रुतेर्जीवेन सह गमनश्रुतिरन्यथा नेयेति चेन्न। भाक्तत्वात् तत्र वागादिशब्दानाम्। वागाद्यभिमानिदेवतासु हि तत्र वगादयः शब्दाः। "ओषधीर्लोमानि वनस्पतीन्केशाः" इत्यनपिययद्भिर्लोमादिभिः सह पाठात्॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्यु-
पपत्तेः ॥ ५ ॥

प्रथमे द्युलोकाग्निहोम अपामश्रवणादापो भूतान्तरसंसृष्टा गच्छन्तीति वक्तुं न शक्यते, तत्र हि " तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव होम्यत्वेन श्रूयते इति चेन्न। ता आप एव हि श्रद्धाशब्देनोच्यन्ते । प्रतिवचनस्य प्रश्नानुगुण्योपपत्तेः। " वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " इति अपां पुरुषवचस्त्वप्रकारे पृष्टे स एव हि प्रतिवक्तव्यः । अतः श्रद्धाशब्देन ता आप एवोच्यन्ते । " श्रद्धा वा आपः " इति श्रूयते ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

" आपः पुरुषवचसो भवन्ति । श्रद्धां जुह्वति " इति द्युलोकादिष्वाप एव गच्छन्तीति श्रूयते, न तत्परिष्वक्तो जीवः, अतः प्रश्नप्रतिवचनयोर्जीवस्याश्रुतत्वात्तत्संयुक्तो जीवो गच्छतीति न शक्यं वक्तुमिति चेन्न । इष्टादिकारिणां प्रतीतेः । उत्तरत्र "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति " इत्यादौ इष्टादिकारिणां जीवानां द्युलोकादिगमनपुनरावृत्तिप्रकारवचने द्युलोकाग्निसम्बद्धस्याप्छब्दवाच्यस्य सोममापन्नस्य भक्ष्याभिधानादत्राप इति तत्संयुक्तो जीव एवोच्यते ॥

" आकाशाच्चन्द्रमसमेष सोमो राजा—तं देवा भक्षयन्ति " इति धूमादिना गतस्य देवैर्भक्ष्यमाणत्वश्रवणात् जीवस्यानदनीयत्वाच्च न जीवस्तत्रोक्त इत्याशङ्क्याह—

भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

वाशब्दः शङ्काव्यावृत्त्यर्थः । " तं देवा भक्षयन्ति " इति भक्ष्यत्ववचनं भाक्तं केवलेष्टादिकारिणामनात्मवित्त्वाद्देवोपकरणत्वाभिप्रायम् । अनात्मविदः केवलेन्द्रादिदेवयाजिनो हि देवान् प्राप्य तदुपकरणं भवन्ति । तथाहि दर्शयति श्रुतिः " यथा पशुरेवं स देवानाम् " इति । अतो भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहति ॥

( कृतात्ययाधिकरणम् । )

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

धूमादिना गतो निवर्तमानो जीवः सानुशयो निवर्तते उत नेति संशयः ॥ नेति पूर्वः पक्षः । अनुशयो हि भुक्तशिष्टं कर्म। "यावत्संपातमुषित्वा । प्राप्यान्तं कर्मणः " इत्यादिश्रुतिभ्यः कृत्स्नस्य कर्मणोऽनुभूततामतीतेर्नानुशयवान्निवर्तते ॥ राद्धान्तस्तु—रमणीयचरणा ब्राह्मणादियोनिं कपूयचरणाः कुत्सितकर्माणः श्वशूकरादियोनिं प्रतिपद्यन्त इति श्रुतेः, " प्राप्यान्त कर्मणः" इत्यादिश्रुतिः फलदानप्रवृत्तकर्मविषयेति सानुशयो निवर्तते ॥ सूत्रार्थः—कृतात्यये कृतस्य पुण्यकर्मणोऽत्ययेऽनुशयवान् भुक्तशिष्टकर्मवान् निवर्तते।कुतः। दृष्टस्मृतिभ्यां श्रुतिस्मृतिभ्यामवगम्यते । " तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीया योनिमापद्येरन्" इति श्रुतिः । "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपम्" इत्यादिका स्मृतिः । यथेतमनेवं च आरोहणप्रकारेण प्रकारान्तरेण च निवर्तते । चन्द्रमसः स्थानादाकाशमित्यारोहणक्रमेणावरोहते। वायुधूमाभ्रादिना प्रकारान्तरेण च ॥

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

"रमणीयचरणाः" इति रमणीयाचारस्य स्मृतिविहितस्य ब्राह्मणादिजन्मप्राप्तिसाधनत्वस्मरणान्न कर्मवान्प्रत्यवरोहतीति चेन्न। चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते। पुण्यस्यैव कर्मणः सुखप्राप्तिसाधनत्वात् ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्मृतिविहितस्याचारस्याकिंचित्करत्वेनानर्थक्यं प्रसज्यत इति चेन्न। तदपेक्षत्वादाचारापेक्षत्वात् सुखसाधनभूतपुण्यकर्मणः। "संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इति सर्वं हि पुण्यकर्माचारापेक्षमिति कार्ष्णाजिनिमतम् ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

तुशब्दः पूर्वमतव्यावृत्त्यर्थः। "रमणीयचरणाः-कपूयचरणाः" इति चरणशब्देन सुकृतदुष्कृते एव कर्मणी प्रतिपाद्येते। "पुण्यं कर्माचरति" इति चरतेः कर्मणि प्रसिद्धेर्न लक्षणा न्याय्येति बादरिर्मन्यते। इदमेव सूत्रकाराभिप्रेतम्। तुशब्देन पूर्वस्माद्व्यावृत्तेः। सुकृदुष्कृते एवेति व्यावर्तनात्। "आनर्थक्यमिति चेन्न तदपेक्षत्वात्" इति तु स्वीकृतम् ॥

( *अनिष्टादिकार्यधिकरणम्।* )

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

विहिताकरणप्रतिषिद्धसेवारताः पापकर्माणोऽपि धूमादिना चन्द्रमसं गत्वा निवर्तन्ते उत नेति संशयः ॥ गत्वैव निवर्तन्त

इति पूर्वः पक्षः । " ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति " इति सर्वेषामविशेषेण चन्द्रगमनश्रुतेः ॥ राद्धान्तस्तु—" अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति " इति धूमादिना चन्द्रगमनस्य पुण्यकर्मफलत्वश्रवणात् तद्रहिताः पापकर्माणो न गच्छन्तीति " ये वैके च" इति वचनं सर्वेषां पुण्यकर्मणां चन्द्रगमनविषयम् ॥ सूत्रार्थः—अनिष्टादिकारिणामपि इष्टापूर्ताद्यकुर्वतां पापिनामपि चन्द्रगमनमस्ति " ये वैके च " इति यतोऽविशेषेण श्रुतम् ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गति-
दर्शनात् ॥ १३ ॥

इयांस्तु विशेषः । संयमने यमशासने पापफलमनुभूयेतरेषां पापिनां चन्द्रारोहावरोहौ । कुतः । तद्गतिदर्शनात् पापिनां यमसदनगतिदर्शनात् " वैवस्वतं संगमनं जनानाम्" इत्यादौ ॥

स्मरन्ति च ॥ १४ ॥

" सर्वे चैते वशं यान्ति यमस्य भगवन् किल " इति पराशरादयः स्मरन्ति च ॥

अपि च सप्त ॥ १५ ॥

सप्तापि रौरवादयो लोकाः पापिनां गन्तव्यत्वेन स्मर्यन्ते ॥

ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिरित्यत आह—

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

सप्तस्वपि रौरवादिलोकेषु यमव्यापारादेव गमनाद्यम-

ष्यताया अविरोधः ॥ अतः पापिनामपि यमयातनामनुभूय चन्द्रारोहावरोहावत्रर्जनीयौ ॥

इति प्राप्त उच्यते—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । न पापकर्मणामर्चिरादिना ब्रह्मगमनं धूमादिना चन्द्रगमनं च संभवति । तयोर्विद्याकर्मणोः फलत्वात् । कथमवगम्यते तत्फलत्वमिति । इत्थं प्रकृतत्वाद्विद्याकर्मणी हि प्रकृत्य तत्फलत्वेन गतिद्वयं प्रतिपाद्यते " तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ति " इति " अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति " इति च । पापिनां विद्यारहितत्वेन ब्रह्मगमनाभाववत् पुण्यकर्मरहितत्वेन चन्द्रगमनमपि न संभवतीत्यर्थः ॥

"पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " इति पञ्चमाहुत्या देहारंभश्रवणात् तस्याश्चन्द्रगमनपूर्वकत्वेन पापिनामपि देहारम्भाय चन्द्रगमनमवश्यं भवतीत्याशङ्क्याह—

न तृतीये तथोपलब्धेः ॥ १८ ॥

केवलपापकर्मणः तृतीयस्थानम् । न तृतीये स्थाने देहारम्भाय पञ्चमाहुत्यपेक्षाऽस्ति । तथोपलब्धेः " वेत्थ यथा केनासौ लोको न संपूर्यते" इति द्युलोकस्यापूर्तिः क इति प्रश्नस्य प्रतिवचने " अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते" इति तृतीयस्थानस्य द्युलोकाप्राप्तिश्रवणात् तस्य देहारंभे पञ्चमाहुत्यनपेक्षत्वं ह्युपलभ्यते ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥

पुण्यकर्मणामपि केषां चिद्द्रौपद्यादीनां देहारंभे पञ्चमाहुत्यनपेक्षत्वं शिष्टलोकेऽपि स्मर्यते ॥

दर्शनाच्च ॥ २० ॥

श्रुतावपि दृश्यते केषाञ्चिद्देहारंभे पञ्चमाहुत्यनपेक्षत्वम् । "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जं च" इति स्वेदजोद्भिज्जयोर्देहारंभे पञ्चमाहुत्यनपेक्षत्वम् ॥

"अण्डजं जीवजमुद्भिज्जम्" इत्यत्र स्वेदजस्य ग्रहणं न विद्यत इत्याशङ्क्याह—

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

"अण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देन संशोकजस्य स्वेदजस्यावरोधः संग्रह इत्यर्थः । ततः केवलपापकर्मणां चन्द्रारोहावरोहौ न संभवतः ॥

( तत्स्वाभाव्यापत्त्यधिकरणम् । )

तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

धूमादिना चंद्रमसः प्राप्तस्य प्रत्यवरोहप्रकार आम्नायते "यथेतमाकाशमाकाशाद्वायुर्वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति । अत्राकाशादिभावः किं देवमनुष्यादिभाववदाकाशादिशरीरत्वमुत तत्सादृश्यापत्तिरिति संशयः ॥ आकाशादिशरीरत्वमिति पूर्वः पक्षः । श्रद्धायाः सोमराजभाववत् तत्र हि तत्तच्छरीरत्वमे-

वोच्यते ॥ राद्धान्तस्तु—आकाशादिप्राप्तो सुखदुःखानुभवाभावात् तत्सादृश्यापत्तिरेव । सुखदुःखानुभवाय हि सोमादिशरीरत्वम् ॥ सूत्रार्थः—तत्स्वाभाव्यापत्तिः आकाशादिसादृश्यापत्तिरुपपत्तेः सुखदुःखानुभवाभावाख्योपपत्तेः ॥

(नातिचिराधिकरणम् ।)

## नातिचिरेण विशेषात् ॥ २३ ॥

आकाशवायुधूमाभ्रमेघवर्षप्राप्तौ किं तत्र नातिचिरं तिष्ठति उतानियम इति संशयः ॥ अनियम इति पूर्वपक्षः । नातिचिरेणेति विशेषवचनाभावात् ॥ राद्धांतस्तु—उत्तरत्र व्रीह्यादिभावे "अतो वै खलु दुर्निष्प्रपतरम्" इति विशेष्य चिरेण गमनवचनं ततः प्राचीनेष्वाचरगमनं द्योतयतीति आकाशादियावद्व्रीह्यादि प्राप्तौ नातिचिरं तिष्ठति ॥ सूत्रमपि व्याख्यातम् ॥

(अन्याधिष्ठिताधिकरणम् ।)

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

अवरोहतो जीवा व्रीह्यादिभावेन जायत इति श्रूयते "मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयास्तिलमाषा जायन्ते" इति । ते किं व्रीह्यादिशरीरा जायन्त उतान्यैः क्षेत्रज्ञैः व्रीह्यादिशरीरैरधिष्ठितान्व्रीह्यादीनाश्लिष्यन्तीति संशयः ॥ जायन्त इति वचनाद्व्रीह्यादिशरीरभोक्तारो जायन्त एवेति पूर्वः पक्षः ॥ राद्धान्तस्तु—व्रीह्यादिजन्महेतुभूतकर्मविशेषाश्रवणाद्व्रीह्यादिसंश्लेषमात्रमेव । जायन्त इति जन्मवचनं औपचारिकम् । ब्राह्मणादिशरीरभावे हि रमणीयचरणा इति जन्महेतुभूतं पुण्यपापरूपं कर्म श्रूयते ॥ सूत्रार्थस्तु—अन्याधि-

ष्ठिते अन्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ संश्लेषमात्रं कुतः पूर्ववदभिलापादाकाशादिभाववत्केवलव्रीह्यादिभावाभिलापात् । जन्महेतुकर्मानभिधानादित्यर्थः ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

यद्यपि व्रीह्यादिभावेन जायन्त इत्यत्र जन्महेतुकर्माश्रुतं तथापि पूर्वश्रुतमिष्टादिकर्माग्नीषोमीयादिहिंसागर्भत्वेनाशुद्धं व्रीह्यादिजन्मनोऽपि हेतुर्भवतीति चेन्न। हिंसाभावशब्दात्। यूपे हि संज्ञप्तस्य स्वर्गावाप्तिसाधनभाववादिशब्दः श्रूयते "हिरण्यशरीर ऊर्ध्वः स्वर्गलोकमेति । न वा उवेतन्म्रियसे न जरिष्यसि" इत्यादि ॥

रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रम् । व्रीह्यादिभावानन्तरं रेतःसिग्योगः श्रूयते " यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति" इति। अत्र हि पुरुषसंश्लेषमात्रमेव श्रुतम् । एवं व्रीह्यादिभावेऽपीत्यभिप्रायः ॥

योनेः शरीरम् ॥ २७ ॥

योषित्प्राप्तेः पश्चादेवावरोहतो जीवस्य शरीरमाप्तिः तत्रैव सुखदुःखोपभोगात् । ततः प्रागाकाशादिषु तत्तत्संश्लेषमात्रमित्यभिप्रायः ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
तृतीयस्याध्यायस्य प्रथमः पादः ।

---

( सन्ध्याधिकरणम् । )

## संध्ये सृष्टिराह हि ॥ १ ॥

स्वप्नमधिकृत्य श्रूयते " न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्रथयोगान्पथः सृजते " इत्यारभ्य "अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति। किं स्वाप्नानामर्थानां स्रष्टा जीव एव उत परमात्मेति संशयः ॥ स्वप्नदशो जीवस्य सन्निधानात्स हि कर्तेति स एव हि परामृश्यते। जीवस्यापि सत्यसङ्कल्पत्वं प्रजापतिवाक्योदितमिति स एव स्रष्टेति पूर्वः पक्षः ॥ राद्धान्तस्तु–जीवस्य सत्यसंकल्पत्वादिकं स्वाभाविकमपि संसारदशायां परमपुरुषसंकल्पात्तिरोहितमिति न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते। अतः परमपुरुष एव सकलेतरपुरुषानुभवाविषयांस्तत्तत्पुरुषमात्रानुभाव्यांस्तत्कालावसानान्स्वाप्नार्थान्सृजति ॥ सूत्रार्थस्तु–सन्ध्ये स्वप्ने श्रूयमाणा रथादिसृष्टिः स्वप्नदृशाजीवेन कृता । कुतः । आह हि स हि कर्तेति तस्यैव परामर्शादित्यर्थः ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

एतमेव जीवं निर्मातारं स्वाप्नानामर्थानामेके शाखिनोऽधीयते " य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः " इति। अत्र कामशब्दनिर्दिष्टाः काम्यमानतया पुत्रादय एव। चशब्दोऽवधारणे। अत्र हि " सर्वान्कामान् " इति कामशब्देन प्रकृतान् " शतायुषः पुत्रपौत्रान्वृणीष्व " इति विविनक्ति ॥

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दात्पक्षो निवर्तते। न जीवेन स्रष्टं स्वाप्नमर्थजातमपि तु परमेश्वरमायामात्रम्। सकलेतरपुरुषानुभवाविषयं तदेकानुभाव्यतत्कालावसानमाश्चर्यभूतमर्थजातमीश्वरः सृजतीत्यर्थः। जीवस्य स्वतः सत्यसंकल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात् तस्य हि संकल्पमात्रेण स्रष्टृत्वं नोपपद्यते। "कामं कामं पुरुषो निर्मिमाणः" इति परमपुरुषमेव निर्मातारमाह। "य एषु सुप्तेषु जागर्ति। तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति उपक्रमोपसंहारयोः परमपुरुषासाधारणधर्मप्रतीतेः। स हि कर्तेति च तेनैकार्थ्यात्परमपुरुषमेवाह॥

जीवस्य स्वाभाविकं चेत्सत्यसंकल्पत्वादिकं कथं नाभिव्यज्यते इत्याशङ्क्याह—

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ॥ ४॥

तुशब्दः शङ्कानिवृत्त्यर्थः। परमपुरुषाभिध्यानादस्य स्वाभाविकं स्वरूपमनादिकर्मप्रवाहेण कृतापराधतया तिरोहितम्। ततो ह्यस्य बन्धविपर्ययौ ततः परमपुरुषसंकल्पादेव ह्यस्य बन्धविपर्ययौ संसारमोक्षौ श्रूयेते "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति। परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादौ॥

तिरोधानप्रकारमाह—

देहयोगाद्वा सोऽपि॥ ५॥

सोऽपि तिरोधानभावोऽपि देहयोगाद्वा भवति। वाशब्दो विकल्पार्थः। व्यवस्थितश्च विकल्पः। देवमनुष्यादिदेहाकारे-

या परिणताचिद्योगात्सृष्टिवेलायाम् नामरूपविभागानर्हसूक्ष्मद-शापन्नाचिद्योगेन प्रलयकाले ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

इतश्च स्वाप्नरथादयो न जीवसंकल्पकृताः । यतः स्वप्नः शुभाशुभयोः सूचक इति श्रुतेरवगतम् ।

" यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥
यः स्वप्ने पुरुषं कृष्णं कृष्णदन्तं च पश्यति ।
स एनं हन्ति " इत्यादिषु स्वप्नाध्यायविदश्चाचक्षते । जीवसङ्कल्पकृतत्वे हि सूचकत्वं न संभवति । स्वसङ्कल्पकृतत्वे हि शुभानामेव सूचकानर्थान्सृष्ट्वा तानेव पश्यति । अतः स्वाप्नानां परमपुरुष एव स्रष्टा ॥

( तदभावाधिकरणम् । )

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयंते । किमेषां विकल्प उत समुच्चय इति संशयः ॥ विकल्प इति पूर्वः पक्षः । "आसु तदा नाडीषु सुप्तो भवति । ताभिः प्रत्यवसृप्य पुरीतति शेते । सता सोम्य तदा सम्पन्नो भवति " इति त्रयाणां नैरपेक्ष्यप्रतीतेः ॥ राद्धान्तस्तु—प्रासादखट्वापर्यंकवत्कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो न युक्त इति समुच्चयो न्यायः ।तत्र पर्यंकस्थानीयं ब्रह्म । यतः पर्यंकवद्ब्रह्म साक्षात्सुषुप्तिस्थानम् ॥ सूत्रार्थः—तदभावः स्वप्नाभावः सुषुप्तिरित्यर्थः । सुषुप्तिर्नाडीष्वात्मनि । चकारात्पुरीतति च। तच्छ्रुतेः त्रयाणां सुषुप्तिस्थानत्वश्रुतेः । उक्तेन न्यायेन समुच्चयो न्याय्य इत्यभिप्रायः ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

अस्माद्ब्रह्मणः प्रबोधश्रुतिः अत एवोपपद्यते "सत आगम्य न विदुः सत आगच्छामहे" इति श्रूयते ॥

( कर्मानुस्मृतिशब्दविध्यधिकरणम् । )

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

किं सुपुप्त एव प्रबोधकाले उत्तिष्ठति उतान्य इति संशयः ॥ सुपुप्तस्य सर्वोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नत्वेन मुक्तादविलक्षणत्वेन प्राचीनकर्मसंबन्धाभावादन्य इति पूर्वः पक्षः ॥ सुपुप्तस्य प्रारब्धकर्मासमापनाद्ब्रह्मज्ञानाभावेन पूर्वकृतस्य कर्मणस्तेनैवोपभोक्तव्यत्वात् सोहमिति प्रत्यभिज्ञानात् "त इह व्याघ्रो वा सिंहो वा" इत्यारभ्य "यद्यद्भवन्ति तदा भवन्ति" इति शब्दान्मोक्षसाधनविध्यानर्थक्याच्च स एवोत्तिष्ठतीति राद्धान्तः । न चासौ शरीरेन्द्रियसंबन्धविनिर्मुक्तः किं तु कलेवरप्रवर्तनायासादाश्वासनाय ब्रह्मण्यपीतः पुनरारब्धस्तः प्रवर्तनायोत्तिष्ठतीति ॥ सूत्रमपि व्याख्यातम् ॥

( मुग्धाधिकरणम् । )

मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

किं मूर्च्छा मरणादर्थान्तरमुत मरणमेवेति संशयः ॥ सर्वेन्द्रियप्राणव्यापारोपरतेर्मरणमेवेति पूर्वः पक्षः ॥ आकारवैरूप्येण सूक्ष्मप्राणास्तित्वावगतेर्मरणायार्धसम्पत्तिरिति राद्धान्तः ॥ सूत्रार्थः मुग्धे मूर्च्छिते पुरुषे याऽवस्था सा मूर्च्छा मरणायार्द्धसम्पत्तिः । कुतः । परिशेषात् प्राणादिसर्वव्यापारोपरतेः न जागराद्यवस्था न च गतप्राणा तदाकारवैलक्षण्येन सू-

क्ष्यमाणास्तित्वावगतेः मूर्च्छितस्यैव कस्य चित्पुनर्जीवनदर्शनाच्च न मरणमिति पारिशेष्यान्मरणार्धसम्पत्तिरित्यवगम्यते ॥

( उभयलिङ्गाधिकरणम् )

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

जीवस्येव तदन्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिस्थानप्रयुक्ता दोषाः संभवन्त्युत नेति संशयः ॥ "यः पृथिव्यां तिष्ठन् । य आत्मनि तिष्ठन् । यश्च सुप्ते तिष्ठन् । यो रेतसि तिष्ठन्" इत्यादिना जीवस्येव सर्वावस्थावस्थितिवचनाच्छन्दतोऽपि पूयशोणितादिमज्जनमपुरुषार्थ एवेति सर्वे दोषाः संभवन्तीति पूर्वः पक्षः ॥ राद्धान्तस्तु—"अपहतपाप्मा विजरः । निरवद्यं निरञ्जनम् । सत्यकामः सत्यसङ्कल्पः । यः सर्वज्ञः सर्ववित् । यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इत्यादिश्रुतिस्मृतिभ्यो निरस्तनिखिलदोषगन्धतासार्वज्ञ्यसत्यसङ्कल्पत्वाद्युभयलक्षणस्वरूपत्वावगतेः परस्य ब्रह्मणः सर्वत्रान्तर्यामितयाऽवस्थितस्यापि न दोषगन्धः संभवति । अपि तु सर्वनियमनरूपलीलारस एव ॥ सूत्रार्थस्तु—परस्य पृथिव्यात्मादिष्वन्तर्यामितयाऽवस्थानतोऽपि परस्य ब्रह्मणो, जीवस्य तत्र तत्रावस्थितस्य ये दोषा उक्तास्ते न संभवन्ति । उभलिङ्गं सर्वत्र हि । हि हेतौ । यतः सर्वत्रश्रुतिस्मृतिषु निरस्तनिखिलदोषत्वसमस्तकल्याणगुणात्मकस्वरूपोभयलिङ्गमुभयलक्षणं परं ब्रह्मावगतम् ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यथा जीवस्य स्वतोऽपहतपाप्मत्वादियुक्तस्यापि देवादि-

शरीरसंबन्धितयाऽवस्थाभेदादुक्तदोषसंबन्धित्वमेवं परस्यापि "यस्य पृथिवी शरीरम्" इत्यादिशरीरसंबन्धित्वावस्थाभेदात्ते दोषाः स्युरिति चेन्न। प्रत्येकं प्रतिपर्याय मतद्वचनाद्दोषासंबन्धित्ववचनात् "यस्य पृथिवी शरीरम्" इत्यादिषु "एष त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानाच्चत्स्वरूपं तिरोहितमित्युक्तम्। अतः शरीरसबन्धित्वेऽपि परस्यैते न दोषाः॥

अपि चैवमेके॥ १३॥

अपि च यदिदं जीवपरयोरेकस्मिन् शरीरित्वेनावस्थितयोर्दोषसबन्धित्वं तद्विपरीतत्वं चोक्तम् एवमेके शाखिनः स्वशब्देनाधीयते "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति॥

मनुष्यादिशरीरेषु शरीरित्वमेव जीवस्य नामरूपभाक्त्वेन कर्मवश्यताहेतुः तत्परस्याऽपि अविशिष्टं चेत्कथं परस्य ब्रह्मणोऽकर्मवश्यत्वेन कर्मफलानशनमुच्यत इत्यत आह—

अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

मनुष्यादिशरीरेषु शरीरित्वेऽप्यरूपवदेव हि तत्परं ब्रह्म। कुतः। प्रधानत्वात् निर्वाहकत्वात्। जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढु परस्य तच्छरीरे शरीरित्वेनावस्थानम्। यथाह "यस्य पृथिवी शरीरम्। यस्यात्मा शरीरम्—य आत्मानमतरो यमयति। अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा। आकाशो ह वै नामरूपयोर्निर्वहिता ते यदतरा" इति। अत उभयलिंगमेव हि पर ब्रह्म॥

"सत्यं ज्ञानमनंतं ब्रह्म" इति प्रकाशैकस्वरूपता ब्रह्मण उच्यते कथमुभयलिङ्गत्वमित्याशंक्याह—

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा "सत्यं ज्ञानम्" इति वाक्यावैयर्थ्यात् प्रकाशो ब्रह्मणः स्वरूपमित्यवगम्यते तथा "यः सर्वज्ञः सर्ववित्। परास्य शक्तिर्विविधैव श्रूयते" इत्यादिवाक्यावैयर्थ्यात्कल्याणगुणाकरत्वं च ब्रह्मणः स्वरूपमित्यवगम्यते इत्युभयलिङ्गमेव॥

आह च तन्मात्रम् ॥ १६ ॥

"सत्यं ज्ञानम्" इति वाक्यं ब्रह्मणो ज्ञानं स्वरूपमित्येतावन्मात्रमाह न पुनः गुणाकरत्वं निषेधति ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च वेदान्तवाक्यगणो निरस्तनिखिलदोषतां कल्याणगुणाकरत्वं च "निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम्। तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्" इत्यादिकः। स्मर्यते च "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्" इत्यादिषु ॥

अत एव चोपमा सूर्याकाशादिवत् ॥ १८ ॥

यतो ब्रह्मणो निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वेन उभयलिंगत्वात् पृथिव्यादिस्थानतोऽपि न तत्तत्प्रयुक्तदोषगंधसम्भवः अत एव शास्त्रेषु च जलसूर्यादिवदित्युपमा क्रियते।

"आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इत्यादिषु ॥

अंबुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

तुशब्दश्चोद्यं द्योतयति । अंबुनीवाग्रहणात् । यथा अंबुनि सूर्यो गृह्यते तत्रानवस्थित एव भ्रांत्या तत्रस्थ इव, तथा परमात्मा पृथिव्यादौ न गृह्यते । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इति परमार्थतः स्थितो गृह्यते । अतो न तथात्वं न सूर्यस्येव तत्प्रयुक्तपगंधाभावः परमात्मनः । परमार्थतः स्थितत्वात् ॥

परिहरति—

वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवं दर्शनाच्च ॥ २० ॥

पृथिव्यादिषु विषमेषु स्थितस्यापि परमात्मनस्तदंतर्भावात्तत्र स्थानात्तत्प्रयुक्तवृद्धिह्रासभाक्त्वं "जलाधारेष्ववांशुमान्" इति दृष्टांतेन निवर्त्यते । कुतोऽवगम्यत एतावन्मात्रमिति । उभयसामंजस्यादेवं उभयदृष्टान्तोपादानसामंजस्यादेवमवगम्यते । "आकाशमेकं हि यथा" इति घटकरकादिषु विषमेष्ववस्थितमाकाशं "जलाधारेष्ववांशुमान्" इति चांशुमंतं परमार्थतः स्थितमनवस्थितं चोभयं दृष्टान्ततयोपादाय "तथात्मैकोऽप्यनेकस्थः" इति निगमनात् तत्तत्स्थानप्रयुक्तवृद्धिह्रासभाक्त्वनिवर्तनमात्रं विवक्षितमित्यवगम्यते । अन्यत्रापि दृष्टांतदार्ष्टांतिकयोः सर्वसाम्याभावेऽपि "सिंह इव माणवकः" इत्यादिषु दृष्टांतोपादानदर्शनाच्चैवमवगम्यते ॥

"अथात आदेशो नेति नेति" इत्यादिना पूर्वमुक्तस्य मूर्तामूर्तप्रपञ्चस्य ब्रह्मणो रूपत्वप्रतिषेधात् निष्प्रपञ्चसन्मात्रमेव ब्रह्म न पुनरुक्तस्वरूपमुभयलिङ्गमित्याशङ्क्याह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥

हिर्हेतौ। "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च" इत्यादिना स्थूलस्य सूक्ष्मस्य च प्रपंचस्य ब्रह्मणो रूपतया प्रमाणांतराप्रज्ञातस्यात्रैव रूपतयोपादिष्टस्य निषेधासंभवात् प्रकृतैतावत्त्वं हि ब्रह्मणः प्रतिषेधति। पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति हि "अथात आदेशो नेति" इत्यत्र प्रतिपाद्यते इत्यर्थः। ततो ब्रवीति च भूयः। ततः पूर्वोक्ताद्भूयस्त्वं ब्रवीति च वाक्यशेषः "न ह्येतस्मादिति नेत्यन्यत्परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति न इति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्र ह्यस्ति परम् ब्रह्मणोऽन्यत्स्वरूपतो गुणैश्चोत्कृष्टं न ह्यस्तीत्यर्थः। "सत्यस्य सत्यम्" इति ब्रह्मणो नामधेयम् तस्य निर्वचनं "प्राणा वै सत्यं तेषामेष सत्यम्" इति प्राणसाहचर्यात् जीवात्मानः प्राणाः। ते हि वियदादिवदनुत्पाद्यत्वेन सत्याः। तेभ्योऽप्येष सत्यं ते हि कर्मानुगुणदेहयोगेन जन्मवन्तः तदप्यस्य नास्तीति तेषामेष सत्यं ज्ञानसङ्कोचविकासरूपविकारस्याप्यभावात्। अतः प्रमाणान्तराज्ञातस्वरूपस्य ब्रह्मणो मूर्तामूर्तप्रपञ्चप्रकारतयोपदेशात् उभयलिङ्गमेव। पुनरपि प्रकारविशेषोपदेशाच्च "अथात आदेशो नेति" इति पूर्वप्रकृतेयत्ता ब्रह्मणः प्रतिषिध्यत इत्यर्थः॥

ननु च प्रत्यक्षेण निर्विशेषसन्मात्रमेव गृह्यते तद्व्यतिरिक्तं सर्वं भ्रान्त्या प्रतीयमानं सविशेषमनूद्य नेति नेति निषिध्यत इत्यत्राह—

## तदव्यक्तमाह हि ॥ २२ ॥

प्रमाणान्तराज्ञाततां द्रढयति। तद्ब्रह्म न केनापि प्रमाणेन

व्यक्तम् । तथा हि श्रुतिः "न संदृशे तिष्ठति रूपमस्य" इत्यादिका । प्रत्यक्षेण गृह्यमाणमस्तित्वं घटादेरेव न ब्रह्मण इत्यर्थः ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपि च संराधन एवोपलभ्यते । सराधनं सम्यक्प्रीतिकरं प्रीतियुक्तभजनम्। उपासनमिति यावत् ।उपासनरूपप्रीणनेन विना केनापि नोपलभ्यते इति श्रुतिस्मृतिभ्यामवगम्यते । नायमात्मा प्रवचनेन लभ्यो "न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः। नाहं वेदैर्न तपसा न दानेन न चेज्यया—भक्त्या त्वनन्यया शक्य अहम्" इति श्रुतिस्मृती । अतः केनापि प्रमाणेनानभिव्यक्तरूपत्वाद्ब्रह्मणो " द्वे वाव रूपे " इत्यादिना ब्रह्मणः प्रकारतयोपादिष्टं जगदैश्वर्यं नेतीति न निषिध्यते किं तु प्रकृतैयत्तामात्रं निषिध्यते ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

इतश्च ज्ञानानन्दवज्जगदैश्वर्यमपि ब्रह्मणो रूपम् । येषां वामदेवादीनां संराधनरूपकर्मण्यभ्यासात्प्रकाशश्च सञ्जातः दर्शनं सञ्जातं तेषां दर्शने प्रकाशादिवत् ज्ञानादेरिव जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते। "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च " इत्यादौ ॥

अतोऽनंतेन तथाहि लिङ्गम् ॥ २५ ॥

अतोऽनन्तेन कल्याणगुणेन योगो ब्रह्मणः सिद्धः तथा सत्युभयलिङ्गमेव ब्रह्म ॥

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥

"द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिष्टमचिद्वस्तुनो ब्रह्मरूपत्वं किं ब्रह्मस्वरूपस्यैवाचिद्रूपेण परिणामाद्भवति उत राशिवत् ब्रह्मण्यचिद्वस्तुनि चैकजातियोगात् अथ जीववत् ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनेति संशयः ॥ भिन्नाभिन्नत्वरूपोभयव्यपदेशोपपत्तये ब्रह्मैवाचिद्रूपेण परिणमत इति प्रथमः पक्षः ॥ तथा तु सति ब्रह्मणो निर्दोषता बाध्येतेत्येकजातियोगेनेति द्वितीयपक्षः ॥ एवं सति "आत्मैवेदं सर्वम् । ब्रह्मैवेदं सर्वम्" इति ब्रह्मस्वरूपस्यैव सर्वशब्दवाच्यत्वव्यपदेशबाधः स्यात्, न ह्येकैव गोव्यक्तिः खण्डो गौर्मुण्डो गौः पूर्णशृङ्गो गौरित्यादि सर्वगोव्यक्तिवाचिशब्दैरभिधीयते, अतो जीवस्येव शरीरतया ब्रह्मविशेषणत्वेनाचिद्वस्तुनोऽपि ब्रह्मांशत्वमिति राद्धान्तः ॥ सूत्रार्थः—तुशब्दोऽवधारणे । अहेः कुण्डलभावादिवत् ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानम् । कुतः । नानात्वैकत्वरूपोभयव्यपदेशात् ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

वाशब्दोऽनन्तरोक्तव्यावृत्त्यर्थः । यथा प्रकाशतदाश्रययोस्तेजस्त्वेनैकजातियोगादभिन्नत्वं भिन्नत्वं च एवमचिद्ब्रह्मणोरपि ॥

## पूर्ववद्वा ॥ २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । पूर्ववत् यथा पूर्वत्र "अंशो नानाव्यपदेशात् । प्रकाशादिवत्तु नैवं परः" इत्युभयव्यपदेशोपपत्तये ब्रह्मणो निर्दोषत्वसिद्धये च प्रकाशजातिगुणशरीरवत् पृथक्सिद्ध्यनर्हविशेषणतया जीवस्य ब्रह्मांशत्वमुक्तम् एवं अचिद्वस्तुनोऽपि।अचिद्वस्तुवाचिशब्देनापि अचिद्वस्तुविशिष्टं ब्रह्मैवाभिधेयमिति "आत्मैवेदं सर्वम्।ब्रह्मैवेदं सर्वम्" इत्यभेदव्य-

पदेशोपपत्तिः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदज्ञापनाय विशेषणविशेष्ययोर्भेदेन व्यपदेशश्चोपपद्यते " क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोन्यः " इत्यादिना। ब्रह्मणो निर्दोषत्वं च ॥

## प्रतिषेधाच्च ॥ २९ ॥

" स वा एष महानज आत्माऽजरोऽमरः। नास्य जरयैतज्जीर्यति–विजरो विमृत्युः" इत्यादौ ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यभावेनैवांशांशिभाव इत्यर्थः ॥

( पराधिकरणम् । )

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥

"यतो वा इमानि" इत्यादिना जगज्जन्मादिकारणतया निर्दिष्टात्परस्माद्ब्रह्मणोऽपि परं तत्त्वं किञ्चिदस्ति नेति संशयः॥ इतोऽपि परमस्तीति पूर्वः पक्षः। "अथ य आत्मा स सेतुः" इत्यस्य सेतुत्वव्यपदेशात् "एतं सेतुन्तीर्त्वा" इत्यस्य तरणीयत्वव्यपदेशाच्च इतोप्यन्यदस्तीति गम्यते। "चतुष्पाद्ब्रह्म । षोडशकलम्" इति परिमितत्वव्यपदेशाच्च अपरिमितमन्यदस्तीति प्रतीयते। "अमृतस्यैष सेतुः " इति प्रापकत्वश्रुतेश्चानेन प्राप्यमन्यदस्तीति प्राप्यप्रापकत्वरूपसंबन्धात्प्रतीयते। तथा " तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरम्" इति पुरुषशब्दानिर्दिष्टाद्ब्रह्मण उत्तरत्वेन भेदव्यपदेशाच्चान्यत्परमस्तीति ॥ राद्धान्तस्तु–"न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति नेति निर्दिष्टान्मूर्तामूर्तरूपाद्ब्रह्मणोऽन्यत्पर नास्तीति परत्वनिषेधात् कारणाद्ब्रह्मणोऽन्यत्परं

नास्ति। सेतुत्व व्यपदेशस्तु "एषां लोकानामसंभेदाय" इति सर्वलोकासङ्करकरत्वकृतः । एवं "सेतुं तीर्त्वा" इति तरतिरपि वेदान्तं तरतीतिवत्प्राप्तिवचनः । "चतुष्पाद्ब्रह्म षोडशकलम्" इत्युन्मानव्यपदेशोऽपि "वाक्पादः प्राणः पादश्चक्षुः पादः" इतिवदुपासनार्थः । संभवति चापरिमितस्यापि तत्तद्देशसंबन्धितयोन्मितत्वानुसन्धानम् । "अमृतस्यैष सेतुः" इति स्वस्यैवामृतस्य स्वयमेवं प्रापकमित्युच्यते "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः । "ततो यदुत्तरतरम्" इत्यपि "तेनेदं पूर्णम्" इति निर्दिष्टात्पुरुषादन्यस्य न परत्वमाह । अपि तु "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति पूर्वमतिज्ञातं पुरुषवेदनस्यामृतत्वहेतुत्वमन्यस्य चापथत्वं सहेतुकमुपसंहरति "यस्मात्परं नापरमस्ति किञ्चित्" इत्यारभ्य "तेनेदं पूर्णं पुरुषेण सर्वम्" इति परस्य च सर्वस्मात्परत्वमन्यस्य च परत्वाभावं मतिपाद्य ततो हेतोर्यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमनामयं "य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" इति पूर्वमतिज्ञातमेवोपसंहृतम् ॥ सूत्रार्थः—परमतः "जन्माद्यस्य यतः" इत्याद्यारभ्य "अतोऽनन्तेन तथा हि लिङ्गम्" इत्यन्तेन प्रतिपादितात् निखिलजगदेककारणात्सर्वान्तरात्मनो निरस्तनिखिलदोषगन्धात् अनवधिकातिशयासंख्येयकल्याणगुणगणात्परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति काश्चिन्मन्यते । कुतः । सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । व्याख्याताश्चैते ॥

## सामान्यात्तु ॥ ३१ ॥

तुशब्दः पक्षं व्यावर्तयति । सेतुत्वव्यपदेशमात्रात् तस्मात्परं नावगमयति । सेतुसामान्यात्साद्दश्याज्जगद्विधृतिरूपात् ब्रह्म-

णास्तथा व्यपदेश इति श्रुतिरेव सेतुशब्दं व्याचष्टे " अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति। यद्यत्स्वभावा लोकाः सृष्टास्तत्तत्स्वभावाऽसङ्कराय सर्वान् लोकानयमेव सेतुवद्बिभर्तीति सेतुरित्यर्थः ॥

बुद्ध्यर्थः पादवत् ॥ ३२ ॥

"चतुष्पाद् ब्रह्म। पादोऽस्य विश्वा भूतानि" इत्युन्मानव्यपदेशस्तथा तदुपासनार्थः। "यथा वाक्पादः" इत्यादिना ब्रह्मणो वागादिपादव्यपदेश उपासनार्थ एवमयमपि ॥

स्वयमपरिमितस्वरूपस्यानुसन्धानार्थतयाऽपि कथं परिमितत्वमित्यत आह—

स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥

प्रतिपन्नवागादिस्थानविशेषसंबन्धात्तत्तत्स्थानसंबन्धित्वेनावच्छिद्यानुसन्धानं युज्यते। यथा प्रकाशादेर्विततस्यापि वातायनघटादौ ॥

उपपत्तेश्च ॥ ३४ ॥

" अमृतस्यैष सेतुः " इति स्वस्य स्वयमेव प्रापक इति सेतुव्यपदेशोपपत्तेश्चान्यत्परमस्तीति कल्पनं न युज्यते " नायमात्मा प्रवचनेन लभ्यः—यमेवैष वृणुते तेन लभ्यः " इति श्रुतेः ॥

तथान्यप्रतिषेधात् ॥ ३५ ॥

" तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरम्." इति पुरुषादन्यस्य न परत्वमाह " न तस्येशे कश्चन। न ह्येतस्मादिति नेत्यन्यत्परमस्ति। यस्मात्परं नापरमस्ति किञ्चित् "

(यस्मादपरं परं नास्ति किञ्चित् इत्यर्थः।) एवमादिषु पुरुषादन्यस्य परत्वप्रतिषेधात् । "ततो यदुत्तरतरम्" इति तु व्याख्यातम् यतः पुरुषतत्त्वमेवोत्तरतरं ततो हेतोर्यदुत्तरतरं पुरुषतत्त्वम् तदेव "अरूपमनामयम्" इत्यादिना । "य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" इति "तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति प्रतिज्ञातमेव स हेतुमुपसंहरति। "न तस्येशे कश्चन तस्य नाम महद्यशः" इति च पुरुषतत्त्वमेव वदति । अनन्तरम् "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति पुरुषतत्त्ववाचिनैकवाक्यतावगमात् "अंभस्यपारे। भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्" इति च प्रक्रमात् ॥

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

अनेन ब्रह्मणा सर्वव्याप्तत्वं "तेनेदं पूर्णं पुरुषेण सर्वम्। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति" इत्यायामशब्देभ्यो व्याप्तिवाचिशब्देभ्योऽवगम्यते। एवं गम्यमानं एतस्मात्परं वारयतीत्यर्थः। आदिशब्दात् "आत्मैवेदं सर्वम्" इत्यादयो गृह्यंते। अतो "यतो वा इमानि" इत्यादिनाऽवगताज्जगत्कारणाद्ब्रह्मणोऽन्यत्परं न विद्यते ॥

(फलाधिकरणम्)

फलमत उपपत्तेः ॥ ३७ ॥

किं वेदोदितं यागदानहोमादिकमुपासनाख्यं च ... पासीतेति कामिनो मुमुक्षोश्च कर्तव्यतया ... मैत्रापूर्वद्वारेण भोगापवर्गरूपफलदं उत तद्द्वाराप्यै...

परमपुरुष एव फलद इति संशयः ॥ कर्मैवेति पूर्वः पक्षः । लोके मर्दनादेः कृष्यादेश्च कर्मण एव साक्षात्परंपरया वा फलप्रदत्वदर्शनात् । तथा वेदे च "यजेत स्वर्गकामः। आत्मानमेव लोकमुपासीत" इति कामिनो मुमुक्षोश्च कर्तव्यतया श्रूयमाणं कर्म तत्तत्फलसाधनतयाऽवगतं क्षणिकमप्यपूर्वद्वारेण भोगापवर्गरूपसर्वफलदम् ॥ राद्धान्तस्तु—कर्तव्यतयाऽवगतस्य यागादेरुपासनस्य च "यज देवपूजायाम्" इत्यादिनाऽवगतधात्वर्थस्वाभाव्यात् "वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाक्यशेषाच्च"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हितान् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"

इत्यादिश्रुतिस्मृतिभ्यश्च परमपुरुष एव कर्मभिरुपासनेन चाराधितो भोगापवर्गरूपफलप्रदः । लोके च कृष्यादिकर्मभिः सस्यादिकमुत्पाद्य तेन भृत्यद्वारेण साक्षाद्वा राजानमभ्यर्च्य ततः स्वापेक्षितानि लभन्ते।अतः परमपुरुष एव फलप्रदः॥सूत्रार्थस्तु—फलमत उपपत्तेः । अतः परमपुरुषाद्ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपं फलम् ।कुतः । उपपत्तेः। कर्मभिर्हि क्षणध्वंसिभिर्न कालान्तरभावि फलम्। स हि सर्वज्ञः सर्वशक्तिः परमकारुणिको महोदारोऽनादिरनन्तश्च सर्वेश्वरः स्वाराधनरूपेण कर्मणाऽऽराधितः फलप्रद इत्युपपद्यते ॥

श्रुतत्वाच्च ॥ ३८ ॥

"स वा एष महानज आत्माऽन्नादो वसुदानः। एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीति श्रूयते ॥

धर्मं जैमिनिरत एव ॥ ३९ ॥

यागादिकमुपासनात्मकं च धर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते। अत एवोपपत्तेः श्रुतत्वाच्चेत्यर्थः। लोके कृष्यादेर्मर्दनादेश्च कर्मण एव साक्षात्परंपरया वा फलप्रदायित्वदर्शनात् वेदेऽपि तथैव युक्तमित्युपपत्तिः। उपपद्यते चापूर्वद्वारेण साधनत्वम्। "यजेत स्वर्गकामः। ब्रह्मविदाप्नोति परम्" इति कामिनः कर्तव्यतया कर्मविधानात्तदन्यथा ऽनुपपत्त्या कर्मैवापूर्वद्वारेण फलसाधनमिति गम्यते ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

तुशब्दः पक्षव्यावृत्त्यर्थः। पूर्वोक्तपरमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते। कुतः। हेतुव्यपदेशात् "वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाय्वाद्यात्मनाऽवस्थितस्य परमपुरुषस्यैव फलप्रदत्वव्यपदेशात्। "यो वायौ तिष्ठन्" इति च वाय्वाद्यात्मना स एवावस्थित इति श्रूयते। तत्परित्यागेनापूर्वस्य फलसाधनत्वकल्पने श्रुतहानमश्रुतकल्पनं च। विध्यपेक्षिते फलसाधनत्वप्रकारे वाक्यशेषेणावगते सति न फलसाधनत्वप्रकारकल्पनं न्याय्यम्। यथैव हि रात्रिसत्रादिष्वधिकारी न कल्प्यते इत्यर्थः ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
तृतीयाध्यायस्य द्वितीयः पादः।

---

( सर्ववेदान्तप्रत्ययाधिकरणम् । )

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

किं सर्वेषु वेदान्तेषु श्रूयमाणा दहरादिविद्यैकैव उत वि-द्यान्तरामिति संशयः ॥ अविशेषेण पुनः श्रवणस्य प्रकरणान्त-रस्य च विद्याभेदहेतुत्वाद्विद्यान्तरमिति पूर्वः पक्षः ॥ चोदना-फलसंयोगरूपाख्यानामविशेषात् प्रतिपत्तृभेदेन पुनः श्रवणो-पपत्तेः तत एव प्रकरणान्तरत्वाभावाच्च विद्यैक्यमिति राद्धान्तः । विद्यासु गुणोपसंहारादिचिन्तार्थं शाखान्तरा-धिकरणोक्तन्यायस्तत्फलं च स्थिरीकृतम् ॥ सूत्रार्थः—स-र्ववेदान्तप्रत्ययं दहराद्युपासनमेकम् । कुतः । चोदनाद्य-विशेषात् ॥

भेदान्नेतिचे देकस्यापि ॥ २ ॥

अविशेषपुनः श्रुत्या विद्यभेदावगमान्न विद्यैक्यमिति चैव, एकस्यामपि विद्यायां शखान्तरे प्रतिपत्तृभेदात्पुनः श्र-वणमर्थवदिति न विद्याभेदः ॥

"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति आथर्वणिकानां शिरोव्रतस्य विद्योपदेशाङ्गत्वनियमदर्शनं विद्याभेदं द्योतयति विद्यैक्ये हि आथर्वणिकानामेवेति नियमो नोपपद्येतेत्याशङ्क्याह—

स्वाध्यायस्य तथात्वे हि समाचारेऽधिका-राच्च ॥ ३ ॥

शिरोव्रतं न विद्याङ्गं अपि तु स्वाध्यायस्य तथात्वे हि स्वाध्यायस्य तज्जन्यसंस्कारभाक्त्व हि तन्नियमः "नैतदचीर्णव्रतो-धीयी"त इत्यध्ययनसंबन्धात् । समाचाराख्ये ग्रन्थे इदमपि वेदव्र-

तत्वेन व्याख्यातमिति वेदव्रतत्वावगमाच्च। "ब्रह्मविद्यां वदेत" वेदविद्यामित्यर्थः। सववच्च तन्नियमः। यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसंबन्धिनस्तत्रैव भवन्ति तथैवेदमप्यथर्ववेदसंबन्धित्वेन तत्रैव॥

दर्शयति च॥ ४॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्। छान्दोग्ये दहरविद्यायाम् "तस्मिन् यदन्तः" इति विहितमपहतपाप्मत्वादिगुणाष्टकं तैत्तिरीयके केवलं "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्येवोक्तम्। तदुभयत्र विद्यैकत्वे संभवति॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च॥ ५॥

तदेवं सर्ववेदान्तेषु दहराद्युपासने समाने एकस्मिन् सति तत्तदुपासने वेदान्तान्तरविहितस्य गुणस्य वेदान्तान्तरे चोपसंहारः कर्तव्यः। कुतः। अर्थाभेदात् तद्विद्याङ्गत्वेन तदुपकाराभेदात्। विधिशेषवत् यथैकस्मिन् वेदान्ते वैश्वानरविद्यादिविधिशेषतया विहितस्य गुणस्य तदुपकारायोपसंहारः तथा वेदान्तान्तरेऽपि तद्विद्याङ्गत्वाविशेषादुपसंहारो न्याय्यः॥

(अन्यथात्वाधिकरणम्।)

अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ६॥

अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च। वाजिनां तावत् "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इत्यारभ्य उद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विहितम्। छन्दोगानामपि तद्वदेव "उद्गीथमाजह्रुरनेनैनानभिहनिष्याम" इत्यारभ्य उद्गीथे प्राणदृष्ट्योपासनमेव शत्रुपरिभवफलमुक्तम्। किमुभ-

यत्र विद्यैक्यमुत विद्याभेद इति संशयः॥ चोदनाद्यविशेषाद्विद्यैक्यमिति पूर्वः पक्षः॥ राद्धान्तस्तु—यद्यप्युभयत्रोद्गीथे प्राणदृष्ट्योपासनमविशिष्टं तथापि छन्दोगानाम् "ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रक्रम्य "उद्गीथमाजह्रुरनेनैनानभिहनिष्याम" इत्युद्गीथावयवे प्रणवे प्राणदृष्ट्योपासनमुक्तम् । वाजिनां तु "हन्तासुरान् यज्ञ उद्गीथेन" इत्युपक्रमात् अविशेषेण कृत्स्नोद्गीथे प्राणदृष्ट्योपासनमुक्तम् । "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति छन्दोगानामुद्गानकर्मण्युद्गीथावयवे प्रणवे प्राणदृष्टिविधानात् वाजिनां तु "अथ हेममासन्य प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इति कृत्स्नोद्गीथस्य कर्तरि प्राणदृष्टिविधानाच्चोभयत्र रूपभेदाद्विद्याभेद इति॥ सूत्रार्थस्तु—अन्यथात्वम् शब्दादिति चेदिति राद्धान्तच्छायया परिचोद्य नाविशेषादिति पूर्वपक्षी परिहरति। "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे । अथ हेममासन्य प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्येकत्रोद्गीथे प्राणदृष्टिशब्दादितरत्रोद्गातारि प्राणदृष्टिशब्दाच्च रूपान्यथात्वमिति चेत् । न रूपभेदः। कुतः। अविशेषात् उपक्रमे ह्यविशेषेण "उद्गीथेनात्ययाम । उद्गीथमाजह्रुरनेनैनानभिहनिष्याम" इत्युद्गीथस्यैव उपास्यत्वप्रतीतेः "त्वं न उद्गायेति तथेति तेभ्य एष उदगायत्" इति कर्मण्येवोद्गीथे कर्तृत्वमुपचर्यते इति युक्तम् । अन्यथोपक्रमविरोधः स्यात् ॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

न वैतदस्ति यद्रूपैक्याद्विद्यैक्यमिति। कुतः। प्रकरणभेदात्। छन्दोग्ये हि "ओमित्येतदक्षरमुद्गीथमुपासीत" इति उद्गी-

थावयवभूतं प्रणवमुपास्यं प्रकृत्य "उद्गीथमाजह्रुः" इति वचनादुद्गीथावयवभूतः प्रणव एवोद्गीथशब्देनोच्यत इति गम्यते। वाजसनेयके त्वविशेषेण "उद्गीथेनात्ययाम" इत्युपक्रमात् कृत्स्नोद्गीथ उपास्यः प्रकृतः। अत उद्गीथे प्राणदृष्टिविशेषेऽपि रूपभेदाद्विद्याभेदः। परोवरीयस्त्वादिवत् यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरमिति रूपभेदस्तद्वदत्रापि। एवं प्रकरणभेदेन उपक्रम एवैकत्रोद्गीथावयवविषयत्वेन इतरत्र कृत्स्नोद्गीथविषयत्वेन चोपासनभेदे सिद्धे सति उपसंहारस्थं कर्मविषयं कर्तृविषयं च प्राणदृष्टिविधानं यथाश्रुतमेवावतिष्ठत इत्यभिप्रायः॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥ ८॥

उद्गीथविद्येति संज्ञैक्यात् तद्विधेयविद्यैक्यमुक्तं चेत्तत्संज्ञैक्यं विधेयभेदेऽप्यस्ति तु अस्त्येवेत्यर्थः। यथा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च। यथा च छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासूद्गीथविद्येति संज्ञैक्यम्॥

व्याप्तेश्च समञ्जसम्॥ ९॥

प्रथमप्रपाठके उपक्रमवदुत्तरास्वप्युद्गीथविद्यासूद्गीथावयवस्य प्रणवस्यैवोपास्यत्वव्याप्तेर्मध्यगतस्य "तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्यापि प्रणवविषयत्वं समञ्जसम्॥

(सर्वाभेदाधिकरणम्।)

सर्वाभेदादन्यत्रेमे॥ १०॥

"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इति छन्दोगानां वाजिनां कौषीतकीना च प्राणविद्याऽऽम्नाता । तत्र छान्दोग्यवाजसनेयकयोः सर्वस्य एकरूपत्वात् प्राणविद्यैकैव । कौषीतकीप्राणविद्यायास्तस्याश्च भेदोऽस्त्युत नेति संशयः ॥ अस्ति भेद इति पूर्वः पक्षः । यद्यपि सर्वत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण एवोपास्यः तथापि छन्दोगवाजिनां ज्यैष्ठ्यश्रैष्ठ्यगुणकस्य वागादिगतवसिष्ठत्वादिगुणसंबन्धित्वमपि शब्दादेव प्रतीयते । कौषीतकीनां तु न तथेति रूपभेदाद्विद्याभेदः ॥ राद्धान्तस्तु-यद्यपि कौषीतकीप्राणविद्यायां वागादिगतवसिष्ठत्वादिसंबन्धित्वं प्राणस्य न शब्दाभिहितं तथापि तत्रापि प्राणस्य ज्यैष्ठ्यश्रैष्ठ्योपपादन वागादीनां स्थितेस्तत्तत्कार्यस्य च प्राणाधीनत्वेनेत्येतदविशिष्टमिति वागादिगतवसिष्ठत्वादेरपि प्राणहेतुकत्वानुसंन्धानेन विना प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यानुसंधानमनुपपन्नमिति कौषीतकीप्राणविद्यायामपि वागादिगतवसिष्ठत्वादिसंबन्ध्येव प्राण उपास्य इति रूपाभेदाद्विद्यैक्यम् ॥ सूत्रार्थः—अन्यत्र कौषीतकीप्राणविद्यायामिमे वसिष्ठत्वादयः संस्येव । कुतः । सर्वाभेदात् प्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य तत्राप्यभेदात् । वागादीनां स्थितेः कार्यस्य च प्राणहेतुत्वेन हि प्राणस्य ज्यैष्ठ्यं श्रैष्ठ्यं चात्राप्युपपादितम् । अतो वागादिगतकार्यसामर्थ्यापादनरूपवसिष्ठत्वादिसंबन्धित्वं प्राणस्यात्राप्युक्तमेवेत्यर्थः ॥

( आनन्दाद्यधिकरणम् । )

आनन्दादयः प्रधानस्य ॥ ११ ॥

ज्ञानानन्दामलत्वानन्तत्वरूपब्रह्मस्वरूपनिरूपकगुणाः सर्वासु

परविद्यासूपसंहर्तव्या उत नेति संशयः॥ नोपसंहर्तव्या इति पूर्वपक्षः। प्रकरणाधिकानामुपसंहारे प्रमाणाभावात्। ब्रह्मगुणानां असंख्येयत्वेन उपसंहाराशक्तेश्च॥ राद्धान्तस्तु—ज्ञानानंदादीनां ब्रह्मस्वरूपनिरूपकगुणत्वेन तैर्विना ब्रह्मस्वरूपानुसंधानानुपपत्तेश्च सर्वासूपसंहर्तव्या इति ॥ सूत्रार्थस्तु—"सर्वाभेदात्" इत्यतोऽभेदादिति वर्तते । आनंदादयो गुणाः सर्वासूपसंहर्तव्याः। प्रधानस्य गुणिनो ब्रह्मणः सर्वासु विद्यास्वभेदात्। सर्वासु परविद्यासु ब्रह्मैकमनुसंधेयं चेत् यैर्गुणैर्विना ब्रह्मस्वरूपानुसंधानमशक्यं ते च ज्ञानानंदादयोऽनुसन्धेया इत्यर्थः ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

आनंदादीनां प्राप्तावपि "तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः" इति प्रियशिरस्त्वादीनामप्राप्तिः। ब्रह्मस्वरूपगुणत्वाभावाच्चेषाम् । ब्रह्मणः शिरःपक्षादिभेदे स्वरूपे सति ब्रह्मण उपचयापचयौ प्रसज्येयाताम्। ततश्च "सत्यं ज्ञानमनंतम्। अनंतोऽजरः" इत्यादि विरुध्यते ॥

प्रियशिरस्त्वादिभ्य आनंदादीनां विशेषमाह—

इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे आनंदादयः अर्थसामान्यात् ब्रह्मस्वरूपसामान्यात् ब्रह्मवत्सर्वास्वनुवर्तते। ब्रह्मस्वरूपनिरूपणधर्मत्वेन ब्रह्मस्वरूपसमाना हि ते ॥

प्रियशिरस्त्वादयो ब्रह्मस्वरूपनिरूपणधर्मा न भवंति चेत्तदभिधानं किमर्थमित्यत्राह—

अध्यानाय प्रयोजनाभावात् ॥ १४ ॥

अनुचिन्तनार्थं तदभिधानम्। प्रयोजनांतराभावात् । "ब्रह्मविदाप्नोति परम्" इति वेदितव्यतयोपदिष्टं ब्रह्मानंदमयं प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वा बुद्धावारोप्यत इत्यर्थः ॥

आत्मशब्दाच्च ॥ १५ ॥

"अन्योंतर आत्माऽऽनन्दमयः" इत्यात्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः । शिरःपक्षादयो हि नात्मधर्माः ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

"अन्योंतर आत्मा" इत्यात्मशब्देन परमात्मन एव गृहीतिग्रहणम्। इतरवत् "आत्मा वा इदमेक एवाग्र आसीत्" इत्यात्मशब्देन यथा परमात्मनो ग्रहणं तद्वत्। कथमवगम्यते । तदेकार्थादुत्तरात् " सोऽकामयत बहुस्यां प्रजायेय " इत्यादिवाक्यात् ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

पूर्वेषु "अन्योंतर आत्मा प्राणमयः" इत्यादिवाक्येष्वनात्मस्वात्मशब्दयोगात् कथमुत्तरवाक्यात्तन्निर्णय इति चेत् "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति प्रकृतस्यात्मन एव प्राणमयादिष्वानंदमयपर्यंतेषु आत्मशब्दावधारणात्स्यादेव नियमः। अतः प्रियशिरस्त्वादीनामनात्मधर्मत्वात् ज्ञानानंदादीनामात्मस्वरूपनिरूपणधर्मत्वाच्च तेषामेव सर्वत्रोपसंहारः ॥

( कार्याख्यानाधिकरणम् । )

कार्याख्यानादपूर्वम् ॥ १८ ॥

छांदोग्यवाजसनेयकयोर्ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यं विधाय"स होवाच किं मे वासो भविष्यतीप इति 'होचुः" इत्यपां प्राणवासस्त्वमुक्त्वा "तस्माद्वा एतदशिष्यंतः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लंभुको ह वासो भवत्यनग्नो भवति" इति छान्दोग्ये, वाजसनेयके चापां प्राणवासस्त्वमुक्त्वा"तस्मादेवं विदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुत" इति (आचमनेन प्राणमनग्नं कुरुत इत्यर्थः।) अत्राशनात्पुरस्तादुपरिष्टाच्च क्रियमाणमाचमनं किं प्राणविद्याङ्गं विधीयते उताचमनीयानामपां प्राणवासस्त्वानुसंधानं विधीयत इति संशयः॥ "आचामेत्"इति आचमने विधिप्रत्ययश्रवणात्स्मृत्याचारप्राप्तादाचमनादाचमनांतरं प्राणविद्यांगं विधीयते इति पूर्वपक्षः॥राद्धान्तस्तु-"अशित्वा चाचामेत्"इत्याचमनं च प्रतीयते। आचमनीयानां चापां प्राणवासस्त्वानुसंधानं च "आपो वासः। अद्भिः परिदधति। एतमेव तदनमनग्नं कुरुत" इति प्रतीयते। तत्राचमनं तावत्स्मृत्याचारप्राप्तम्। आपां वासस्त्वानुसंधानम् अप्राप्तम् "अनग्नं कुर्वतो मन्यंते। अनग्नं कुरुत"इति अनुवादस्वरूपं प्रतीयते। तत्राचमनान्तरकल्पनादाचमनमनूद्य आचमनीयानामपां वासस्त्वानुसंधानं अप्राप्तं विधीयत इति युक्तं "तदनमनग्नं कुरुत"इति"वचनानि त्वपूर्वत्वात्" इति न्यायेन विधिवचनमेव भवति॥सूत्रार्थः-अपूर्वमप्राप्तमपां प्राणवासस्त्वानुसंधानं विधेयं न पुनः प्राप्तमाचमनम्। कुतः।कार्याख्यानात्। कार्यस्य अप्राप्तस्याख्यानस्वभावत्वाच्छास्त्रस्येत्यर्थः॥

(समानाधिकरणम्।)

## समान एवं चाभेदात्॥ १९॥

वाजसनेयके अग्निरहस्ये बृहदारण्यके च शांडिल्यविद्या-आम्नाता अग्निरहस्ये तावत् "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानम्" इति । बृहदारण्यके च "मनोमयोऽयं पुरुषो भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वाधिपतिः सर्वमिदं प्रशास्ति" इति। किमत्र विद्याभेद उत नेति संशयः ॥ एकत्र सत्यसङ्कल्पत्वमधिकं श्रुतं इतरत्र वशित्वादयोऽधिका इति रूपभेदाद्विद्याभेद इति पूर्वः पक्षः ॥ राद्धान्तस्तु-उभयत्र मनोमयत्वादिके समाने सति वशित्वादेः सत्यसङ्कल्पत्वाविततिरूपतया तेनाभेदान्न रूपभेद इति विद्यैक्यम् ॥ सूत्रार्थः-मनोमयत्वादिके समाने सति विद्यैक्यम् ।एवं चाभेदाद्वशित्वादिगुणेनाप्यभेदात् । वशित्वादिर्हि सत्यसङ्कल्पत्वविततिः ॥

( सम्बन्धाधिकरणम् । )

संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षिणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरस्तेन उपास्यत्वमुक्त्वा "तस्योपनिषदहरित्यधिदैवतम् । तस्योपनिषदहमित्यध्यात्मम्" इति द्वे एतस्य नामनी उपासनशेषतयाऽऽम्नायेते।किं यथाश्रुते स्थाननियते उतोभयत्रोभे इति संशयः ॥ उभयोः स्थानयोरेकरूपस्यैवोपस्यत्वाद्विद्यैक्यमित्यनियते नामनी इति पूर्वः पक्षः ॥ अक्ष्यादित्यस्थानसंबन्धित्वाकारभेदाद्रूपभेद इति विद्याभेदाद्वे नामनी नियते इति राद्धान्तः ॥ सूत्रार्थः—यथा मनोमयत्वादिगुणविशिष्टस्यैवोपास्यत्वेन उभयत्र विद्यैक्यमेवमन्यत्राक्ष्यादित्याधारस्याप्येक-

स्यैव सतस्य ब्रह्मणः स्थानद्वयसंबन्धान्न रूपभेद इति विद्यैक्यात् द्वे नामनी अनियते ॥

न वा विशेषात् ॥ २१ ॥

न वैतदस्ति यद्विद्यैक्यादुभयत्रोभे नामनी इति। कुतः। विशेषात् उभयत्र हि रूपं विशिष्यते एकत्रादित्यस्थानसंबन्धि ब्रह्म इतरत्राक्षिस्थानसंबन्धि ब्रह्मेति रूपभेद इति नियते नामनी ॥

दर्शयति च ॥ २२ ॥

दर्शयति च श्रुतिर्विद्याभेदेन गुणानुपसंहारं "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन। स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥

(सम्भृत्यधिकरणम्।)

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

तैत्तिरीयके नरायणीयानां खिलेषु च "ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान, ब्रह्म भूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति ब्रह्मणि ज्येष्ठानां गुणानां संभृतिर्द्युव्याप्तिश्चेत्यादि गुणजातमाम्नातम्। किमेषां सर्वासु विद्यासूपसंहारः उत स्थानविशेषोपासनेषु नियम इति संशयः ॥ अनारभ्याधीतत्वात् एषां सर्वासूपसंहार इति पूर्वः पक्षः ॥ राद्धान्तस्तु—यद्यपि न स्थानविशेषसंबन्ध्युपासनमारभ्याधीता एते तथापि द्युव्याप्तिसामर्थ्यात् तस्य हृदयाद्यल्पस्थानेषूपसंहारायोगात् तत्साहचर्याच्चेतरेषां अल्पस्थानविहितासु विद्यासु नोपसंहार इति ॥ सूत्रार्थः—संभृतिद्युव्याप्तीति। समाहारद्वन्द्वत्वेन एकवद्भावः। संभृतिप्रभृतिगुणजातमप्यत एव

स्थानविशेषसंबन्धनियमान्नियतं न सर्वत्रोपसंहार्यम् । शुण्याम्नोर्हि स्वसामर्थ्यादल्पस्थानानर्हतया तदितरस्थाननियता । सम्भृसाघापि तत्साहचर्याच्चैव ॥

( पुरुषविद्याधिकरणम् । )

पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

तैत्तिरीयके पुरुषविद्याऽऽम्नाता "तस्यैव विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इत्यादिका। छान्दोग्येपि "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि" इत्यादिका। किमत्र विद्याभेद उत नेति संशयः ॥ पुरुषविद्येति संज्ञैक्यात् तैत्तिरीयके फलसंबन्धानाम्नानात् छान्दोग्यगत "शतञ्जीवति" इत्यनेन एकफलत्वाच्च विद्यैक्यमिति पूर्वः पक्षः॥ राद्धान्तस्तु–पुरुषविद्येति संज्ञैक्येऽपि सवनत्रयकल्पनप्रकारभेदात् यजमानपत्न्यादिकल्पनप्रकारभेदाच्च रूपभेदात् तैत्तिरीयके पूर्वानुवाकगतस्य "ब्रह्मणो महिमानमाप्नोति" इति ब्रह्मविद्याफलस्यैव सन्निधानात् अफलस्यास्य तदङ्गतया तत्फलत्वात्फलभेदाच्च विद्याभेदः ॥ सूत्रार्थः—पुरुषविद्यायामप्युभयत्र रूपभेदाद्विद्याभेदः । कुतः । इतरेषां अनाम्नानात् । इतरशाखोदितानामितरशाखायामनाम्नानात् । छान्दोग्ये तैत्तिरीयकाम्नातानां यजमानपत्न्यादीनां सवनानामनाम्नानात् तैत्तिरीयके छान्दोग्याम्नातानां यज्ञावयवानामनाम्नानादित्यर्थः । तैत्तिरीयके हि "आत्मा यजमानः श्रद्धा पत्नी" इति यजमानादिकल्पनं "यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि" इति च सवनत्रयकल्पनम् छान्दोग्ये चाशिशिषादीनां दीक्षादित्वकल्पनं पुरुषायुषस्त्रेधा विभज्य सवनकल्पनं चेति यज्ञावयवकल्पनप्रकारभेदाद्रूपभेदः स्पष्टः ।

फलमपि तथैवेति इतरेषामिति फलस्यापि ग्रहणम् ॥

( वेधाद्यधिकरणम् । )

वेधाद्यर्थभेदात् ॥ २५ ॥

आथर्वणिकास्तैत्तिरीयका एतरेयिणश्चैवमादयः उपनिषदारंभेषु "शुक्रं प्रविध्य हृदयं प्रविध्य । शं नो मित्रः शं वरुणः शन्नो भवत्वर्यमा । सह नाववतु" इत्यादिमंत्रान्महाव्रतादीनि च कर्माणि अधीयते । किमेषां विद्यांगत्वं उत नेति संशयः॥ सन्निधिसमाम्नानात् विद्यांगत्वमिति पूर्वः पक्षः ॥ राद्धांतस्तु—"शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादिमंत्रसामर्थ्यान्महाव्रतादीनां च कर्मणा श्रुत्यादिभिश्चाभिचारद्वादशाहादिषु विनियोगवत् "शन्नो मित्रः शं वरुणः । सह नाववतु" इत्यादिमंत्रस्य "ऋतं वदिष्यामि सत्यं वदिष्यामि । तेजस्वि नावधीतमस्तु मा विद्विषावहै" इति मंत्रसामर्थ्यात् अध्ययने विनियोग इति न विद्यांगत्वम् ॥ सूत्रार्थस्तु—वेधाद्यर्थभेदादित्यस्य वेधाद्यर्थभेदवत् "सत्यं वदिष्यामि। तेजस्वि नावधीतमस्तु" इति शन्नोमित्रादिमंत्रस्याप्यध्ययनसंबंधरूपार्थभेदान्न विद्यांगत्वमित्यभिप्रायः ॥ अतः शन्नोमित्रादिमंत्र एवाधिकरणविषयः ॥

( हान्यधिकरणम् । )

हानौ तूपायनशब्दशेषत्वात् कुशाच्छंदःस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनं द्वयोः शाखयोः श्रुतम् । विमुक्तयोः पुण्यपापयोरन्यत्र प्रवेश एकस्यां श्रुतः। विमोचनं प्रवेशश्चोभयमेकस्यां शाखायाम् ।"तदा विद्वान्

पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति । अश्व इव रोमाणि विधूय पापं चंद्र इव राहोर्मुखात्प्रमुच्य—ब्रह्मलोकमभिसंभवामि" इति च केवलविमोचनम् । "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति केवलप्रवेशः । "तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयंति अप्रिया दुष्कृतम्" इत्युभयम् । किं केवलहानिचिंतनं केवलोपायनचिंतनमुभयचिंतनं सर्वासु विद्यासु विकल्पेनानुष्ठेयं उत समुच्चयेनेति, संशयः ॥ तथाम्नातस्यार्थवत्त्वाय विकल्प इति पूर्वः पक्षः ॥ राद्धांतस्तु—पुण्यपापप्रवेशस्य विमोचनापेक्षत्वेन शाखान्तरस्थस्यापि प्रवेशवाक्यस्य शाखान्तरस्थविमोचनवाक्यशेषत्वात् वाक्यद्वयेनैकार्थविधानात् समुच्चयः । एकस्यां शाखायामुभयविधानं प्रतिपत्तृभेदेन परिह्रियते ॥ सूत्रार्थः—हानौ तु । तु शब्दः पक्षव्यावृत्त्यर्थः । हानाविति प्रदर्शनार्थः । केवलविमोचने केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यंभावी। कुतः। उपायनशब्दशेषत्वात् । उपायनशब्दस्य हानिवाक्यशेषत्वादित्यर्थः । सक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वाद् उपायनवाक्यस्य हानिवाक्यशेषत्वं अवगम्यते। प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तराम्नातशेषत्वे दृष्टांतानाह कुशाच्छन्दःस्तुत्युपगानवदिति। "वानस्पत्याः कुशाः" इति प्रदेशांतराम्नातस्य वाक्यस्य यथा "औदुंबर्याः कुशाः" इति तद्विशेषवाचिप्रदेशांतरस्थम् यथा च "देवासुराणां छंदोभिः" इति प्रदेशांतरस्थस्य तत्क्रमविशेषवाचि "देवच्छंदांसि पूर्वम्" इति प्रदेशांतरस्थम् यथा च " हिरण्येन षोडशिनः स्तोत्रमुपाकरोति" इति प्रदेशांतरस्थस्य तत्कालविशेषवाचि "समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति " इति प्रदेशान्तरस्थम् यथा च

" ऋत्विज उपगायन्ति " इति प्रदेशान्तरस्थस्य " नाध्वर्युरुपगायेत् " इति तत् पर्युदासरूपं प्रदेशांतरस्थम् एवमुपायनवाक्यस्य हानिवाक्यशेषतया संभवंत्या गतौ विकल्पोऽयुक्तः । तदुक्तं पूर्वस्मिन्काडे "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य" इत्यादिना ॥

( सांपरायाधिकरणम् । )

सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

किमिदं सुकृतदुष्कृतयोर्हानिचिंतनं देहवियोगकाले एकदेशः क्षीयतेऽध्वनि शिष्टमित्युभयत्रकर्तव्यम् उत देहवियोगकाल एव सर्वं क्षीयते इति संशयः ॥ उभयत्र श्रुतेर्देवयानेन पथा गमनान्यथाऽनुपपत्त्या चोभयत्रेति पूर्वपक्षः । " अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य, धूत्वा शरीरमकृतम् " इति देहवियोगकाले "स आगच्छति विरजां नदीं तत्सुकृतदुष्कृते धूनुते " इति ह्यध्वन्यपि हानिः श्रुता । देहवियोगकाले सर्वकर्मक्षये हि देवयानेन गमनसाधनं कर्म न सम्भवति॥राद्धान्तस्तु–"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये " इति देहवियोगादूर्द्ध्वं ब्रह्मप्राप्तिव्यतिरेकेणानुभाव्यपुण्यपापफलाभावात् " अश्व इव रोमाणि विधूय पापम् " इत्यादिनैकार्थ्यादध्वन्याम्नातमपि "तत्सुकृतदुष्कृते धूनुते" इति वाक्यं देहवियोगकाले सङ्क्रमयितव्यमिति देहवियोगकाल एव हानिचिन्तनम्। सर्वकर्मक्षये हि विद्यासामर्थ्यादेव देवयानेन पथा गमनं चोपपद्यते । विद्या हि स्वयं सूक्ष्मशरीरस्यानारंभिकापि प्रकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रतिपादनाय देवयानेन पथा एनं गमयितुं सूक्ष्म-

शरीरं स्थापयति॥ सूत्रार्थः—सांपराये देहवियोगकाले एव चिन्तनीयम्। कुतः। तर्तव्याभावात् देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण तरितव्यभोगाभावात्। तथा ह्यन्येऽधीयते "तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ संपत्स्ये" इति "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" इति च॥

छन्दत उभयाविरोधात्॥ २८॥

एवं अर्थस्वाभाव्यात् देहवियोगकाले निरवशेषकर्मक्षयेऽवधृते सति "तत्सुकृतदुष्कृते धूनुते" इति वाक्यखण्ड उभयाविरोधादुभयश्रुत्यविरोधात् छन्दतो नेयः "अश्व इव रोमाणि विधूय पापम्—धूत्वा शरीरम्। तस्य तावदेव चिरम्" इति चोभयश्रुत्यविरोधाचरमश्रुतोऽपि "तत्सुकृतदुष्कृते धूनुते" इति वाक्यखण्डः "एतं देवयानं पन्थानमापद्यते" इति प्रथमश्रुतखण्डात् प्रागनुगमयितव्य इत्यर्थः॥

अत्र चोदयति—

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः॥ २९॥

देवयानेन गतिश्रुतेरर्थवत्त्वं देहवियोगकालेऽध्वनि चेत्युभयथा कर्मक्षये सत्येव। अन्यथा देहवियोगकाले सर्वकर्मक्षये सति सूक्ष्मशरीरस्याप्यारंभकनाशेन स्थित्यनुपपत्तेर्देवयानगतिश्रुतिर्विरुध्यते॥

परिहरति—

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्॥ ३०॥

भगवन्तमुपासीनानां देहवियोगकाले सर्वकर्मक्षयेऽप्युपपन्नो देवयानः पन्थाः। कुतः। तल्लक्षणार्थोपलब्धेः तल्लक्षणार्थः तज्जातीयार्थः। अकर्मलभ्यार्थोपलब्धेरित्यर्थः। उपलभ्यते ह्यक-

मेलभ्यार्थो ब्रह्मोपासीनानां " स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति " इत्यादौ । लोकवत् यथा लोके राजानमुपासीनानां प्राकृतपुरुषासाधारणातिरमणीयानेकार्थसिद्धिः तद्वत् सर्वज्ञं सत्यसंकल्पं महोदारं परं ब्रह्मोपासीनानां सर्वमुपपन्नमित्यर्थः ॥

परं ब्रह्मोपासीनानां देहपातसमये सर्वकर्मक्षयादेहपातादूर्ध्वं कर्मफलानुभवो न विद्यत इत्येतन्न संभवति वसिष्ठादीनां ज्ञानिनामपि कर्मफलरूपदेहान्तरसंयोगः पुत्रजन्मविपदादिसुखदुःखानुभवोऽपि दृश्यते इत्याशंक्याह—

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥

येषां ज्ञानिनां देहपातादनंतरं अर्चिरादिका गतिः प्राप्ता तेषां देहपातादूर्ध्वं तरितव्यकर्मफलभोगाभावात् देहपातसमये एव कर्मक्षय उक्तः । वसिष्ठादीनां स्वाधिकारिकाणां यावदधिकारसमाप्ति नार्चिरादिका गतिरस्ति । अपि स्वधिकारे स्थितिरेव । अधिकारहेतुभूतकर्मणः फलदानायारब्धत्वात् । ज्ञानिनोऽप्यारब्धं हि कर्म फलानुभवेनैव क्षीयते ॥

( अनियमाधिकरणम् । )

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

येषूपासनेषूपकोसलादिष्वार्चिरादिका गतिराम्नाता किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः उत सर्वेषां ब्रह्मनिष्ठानामिति संशयः ॥ तन्निष्ठानामेवेति पूर्वः पक्षः । इतरेषां तया ब्रह्मप्राप्तौ प्रमाणाभावात् । यत्तु पञ्चाग्निविद्यायामसाधारणवचनम् । तदप्युपकोशलादिविषयमिति निश्चीयते । अन्यथा उपकोशलादि-

प्याम्नानमनर्थकं स्यात् ॥ राद्धान्तस्तु—पञ्चाग्निविद्यायां "य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषम-भिसंभवन्ति" इति सामान्येन सर्वविषयगतिश्रवणं उपकोशला-द्यप्याम्नानं न बाधितुं क्षमम्। संकोचकं च न संभवति । वि-द्यान्तरेऽर्थतयाऽनुवादेनाप्युपपत्तेः । अतः सर्वेषां तयैव प्राप्तिः । सूत्रार्थः—अनियमः सर्वेषां सर्वेषामविशेषेण तयैव प्राप्तिः। कुत । अविरोधः शब्दानुमानाभ्यां तथासत्येव श्रुतिस्मृतिभ्या-मविरोधः । श्रुतिः पञ्चाग्निविद्यायां निदर्शिता । स्मृतिः "अ-ग्निर्ज्योतिरहः शुक्लः" इत्यादिका ॥

( अक्षरध्यधिकरणम् । )

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपस-दवत्तदुक्तम् ॥ ३३ ॥

बृहदारण्यके "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वम्" इत्यादि श्रूयते । तथाऽऽथर्वणे च "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम्" इत्यादि । किमेषा-मस्थूलत्वादीनां सर्वासु ब्रह्मविद्यासु उपसंहारः उत यत्र श्रुता-स्तत्रैवेति संशयः ॥ विधार्यविशेषरूपतया श्रुतानां सर्वविद्यासा-धारणत्वाभावात् यत्र श्रुतास्तत्रैव नियता इति पूर्वः पक्षः ॥ राद्धान्तस्तु—अस्थूलत्वादीनामप्यानन्दादिवत् ब्रह्मस्वरूपानुस-न्धानान्तर्भावात् सर्वत्रोपसंहारः । न केवलमानन्दादिभिर्ब्रह्म-स्वरूपं प्रत्यगात्मनो व्यावृत्तम् । तस्यापि हि तदेव स्वरूपम् । अस्थू-लत्वादिविशेषितमानन्दादि ब्रह्मणः प्रत्यगात्मनो व्यावृत्तं रूपम् । यद्यपि प्रत्यगात्मा स्वभावतः स्थूलत्वाद्यचेतनधर्मासंब-न्धी तथापि तत्संबन्धार्हताऽस्त्येव । तदर्हतयापि हि पूर्वं तत्संबन्धः सञ्जातः । अतो ब्रह्मणस्तदनर्हस्वरूपानुसन्धानार्थतयाऽस्थूलत्वा-

दयः सर्वत्रानुसन्धेयाः॥सूत्रार्थः—अक्षरधियां अक्षरसंबन्धिनीनामस्थूलत्वादिधियां सर्वविद्यास्ववरोधः संग्रहणम्। कुतः। सामान्यतद्भावाभ्यां ब्रह्मणः सर्वत्र समानत्वात् ब्रह्मानुसन्धानान्तर्भावाच्च तासाम्। गुणवृद्धीनां हि प्रधानानुवर्तित्वं स्वभावः। औपसदवत् यथा जामदग्न्यचतूरात्रपुरोडाशयुपसद्गुणभूतः "अग्निर्होत्रं च" इति मन्त्रः सामवेदपठितत्वेन सामवेदस्वरानियतोऽपि प्रधानभूतोपसदनुवर्तित्वाद्याजुर्वेदिकत्वाच्चोपसदो याजुर्वेदिकोपांशुत्वसंबन्धी तद्वत् अक्षरविद्यासंबन्धितया अधीतत्वेन तद्विद्यानियता अपि प्रधानानुवर्तित्वस्वाभाव्यात् सर्वविद्यासंबन्धिनः। तदुक्तं प्रथमे काण्डे "गुणमुख्यव्यतिक्रमे तदर्थत्वात्" इत्यादिना ॥

एवं तर्हि "सर्वकर्मा सर्वगन्धः" इत्यादीनामपि सर्वेषां ब्रह्मगुणत्वे न क्वचिद्व्यवस्थेत्याशङ्क्याह—

इयदामनात् ॥ ३४ ॥

इयदस्थूलत्वादिविशेषितमानन्दाद्येव सर्वत्रानुसन्धयेम्। कुतः। आमननात् हेतोः। आमननं आभिमुख्येन मननं ब्रह्मानुसन्धानम्। परब्रह्मस्वरूपानुसन्धानं येन विना नोपपद्यते तत्सर्वत्रानुसन्धेयम् अन्यत्तत्र तत्र व्यवस्थितमित्यर्थः ॥

( अन्तरत्वाधिकरणम्। )

*अन्तरा भूतग्रामवत्स्वात्मानोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्* ॥ ३५ ॥

बृहदारण्यके उपस्तिप्रश्नप्रतिवचनं "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः योऽपानेनापानिति स त आत्मा" इत्यादि "अतोऽन्यदार्तम्" इत्यन्तमाम्नातम्। तथा तदन-

न्तरं कहोलप्रश्नप्रतिवचनं "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एतं हैतमात्मानं विदित्वा" इति "अतोऽन्यदार्तम्" इत्यन्तम् । किं उभयत्र विद्यैक्यमुत विद्याभेद इति संशयः ॥ पूर्वत्र प्राणनादिहेतुः प्रत्यगात्मा उत्तरत्राशनायाद्यतीतः परमात्मेत्युपास्यभेदाद्विद्याभेद इति पूर्वः पक्षः ॥ राद्धान्तस्तु—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व" इत्युभयत्र प्रश्नस्य परमात्मविषयत्वादेकरूपत्वाच्च सर्वप्राणिप्राणनादिहेतुत्वस्याशनायाद्यतीतत्वस्य च प्रतिवचनद्वयगतस्य परमात्मन्येकस्मिन्नेवोपास्ये संभवाच्च न विद्याभेदः ॥ सूत्रार्थः—अन्तरा "य आत्मा सर्वान्तरः" इत्युषस्तिप्रश्नो भूतग्रामवस्त्वात्मनः प्रत्यगात्मान इत्यभ्युपगन्तव्यः अन्यथा प्रतिवचनभेदानुपपत्तिरिति चेत्,नात्र प्रत्यगात्मविषयं प्रश्नद्वयम् प्रतिवचनद्वयं च । परमात्मन्येकस्मिन्नेव संभवतीत्यर्थः । उपदेशवत् "स्तब्धोऽस्युत तमादेशमप्राक्ष्यः" इति प्रक्रान्तायामेकस्यामेव सद्विद्यायां "भगवांस्त्वमेव मे तद् ब्रवीतु । भूय एव मा भगवान् विज्ञापयतु" इत्यादिका प्रश्नावृत्तिः प्रतिवचनभेदश्चोपास्यमाहात्म्यप्रतिपादनपरत्वेन दृश्यते तद्वत् ॥

प्रश्नभेदपूर्वकप्रतिवचनप्रकारभेदाद्विद्याभेदोऽवर्जनीय इत्याशङ्क्याह—

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति द्वयोः प्रश्नोः प्रश्नस्यैकरूपत्वेन एकविषयत्वे निश्चिते सति उषस्तिकहोलयोः प्रतिवचनगतबुद्धिव्यतिहारः कार्यः । प्राणनादिहेतुत्वेन बुद्धिः सर्वान्तरात्मविषया कहोलेनापि कार्या । तथा अशनायाद्यतीतत्वबुद्धिरुषस्तिनापि कार्या । विशिंषन्ति

हि उभयत्र याज्ञवल्क्यप्रतिवचनानि एकं सर्वान्तरमेवोपास्यम्॥ इतरवत् यथेतरत्र सद्विद्यायां सर्वाणि प्रतिवचनानि परमकारण परं ब्रह्मैकमेव प्रतिपादयन्ति ॥

सद्विद्यायामप्युपास्यैक्यं प्रश्नप्रतिवचनाद्दृत्त्यावसत्तां कथमवगम्यते इत्यत्राह—

सैव हि सत्यादयः ॥ ३७ ॥

" सेयं देवतैक्षत " इत्यादिषु सर्वत्र सैव परा देवताऽनुवर्तते । "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इति त एव सत्यादयः सर्वेषु प्रतिवचनेषु उपसंह्रियन्ते ॥

( कामाद्यधिकरणम् । )

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

छान्दोग्ये श्रूयते "अथ यदिदमस्मिन् ब्रह्म पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यम् " इत्यादि प्रकृत्य "तद्य इहात्मानं अनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति " इति । वाजसनेयके च " य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इति। किमुभयत्र विद्यैक्यं उत विद्याभेद इति संशयः ॥ रूपभेदाद्विद्याभेद इति पूर्व पक्षः । यद्यप्युभयत्र परमात्मैवोपास्यस्तथाप्येकत्राकाशशब्दाभिधेयः परमात्मोपास्य इतरत्राकाशे शयानः परमात्मेति हि रूपं भिद्यते ॥ राद्धान्तस्तु—हृदयायतनत्वसत्यसंकल्पसत्यकामत्वादेरभेद उभयत्र तद्विशिष्टः परमात्मैवोपास्य इति रूपाभेदाद्विद्यैक्यम् ।छांदोग्ये हि"दहरोऽस्मिन्नंतर आकाशस्तस्मिन् यदंतस्तदन्वेष्टव्यम्" इत्यारभ्य" किं तत्र विद्यते" इ-

त्यादिना परिचोद्य " तस्मिन्कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यारभ्य " सत्यकामः सत्यसंकल्पः" इत्युक्त्वा "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्"इत्याकाशशब्दनिर्दिष्टः परमात्मा तदन्तर्गताश्च सत्यकामत्वसत्यसंकल्पत्वापहतपाप्मत्वादयो गुणाः। अतः परमात्मा हृदयायतनत्वसत्यकामत्वादिविशिष्ट उपास्य इति वाक्येनैव निर्णीतम्। वाजसनेयके च "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी" इत्युक्ते सति वशित्वादेः सत्यसंकल्पत्वविशेषरूपतया स एव परमात्मा हृदयायतनः सत्यसंकल्प उपास्य इति प्रतीयते । अतो दहरविद्याप्रत्यभिज्ञानात्स एव परमात्मा सत्यकामादिगुणाष्टकविशिष्ट उपास्य इति निश्चीयते । एवं निश्चिते सति आकाशे शयान इति आकाशशब्दोऽपि हृदयपुंडरीकान्तर्वर्त्याकाशप्राचीति विचेयमेव ॥ सूत्रार्थः—कामादीतरत्र तत्र च वाजसनेयके छांदोग्येऽपि च सत्यकामत्वाद्येव रूपम्। कुतः। आयतनादिभ्यः हृदयायतनत्वसत्यसंकल्पत्वविशेषरूपवशित्वादिभ्यः तत्सहचारिणः सत्यकामत्वादेः प्रत्यभिज्ञानात्। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । अभयं वै ब्रह्म भवति " इति ब्रह्मप्राप्तिरूपं फलं चैकमिति विधेयम् ॥

"मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन" इत्यादेः प्रकृतत्वात् " स एष नेति नेत्यात्मा" इति च वक्ष्यमाणत्वात् "सर्वस्य वशी सर्वस्येशानः " इत्यादिविशेषणा ब्रह्मस्वरूपत्वाभावात् कथं सत्यकामत्वादेः मोक्षसाधनोपासनरूपत्वमित्यत्राह—

आदरादलोपः ॥ ३९ ॥

वशित्वादेः प्रमाणान्तराविदितस्य श्रुत्यैकमधिगम्य-स्यादरेण प्रतिपादनादलोपः अप्रतिषेधः। तस्यापि ब्रह्मगुण-त्वमवश्याश्रयणीयम्। विशेषनिषेधास्तु सकले एव प्राकृतवि-षयाः। नानात्वनिषेधस्तु सकलस्य ब्रह्मकार्यतया ब्रह्मात्मक-त्वाभिप्रायः॥

सगुणोपासनस्य "स यदि पितृलोककामो भवति" इति पितृलोकादिप्राप्तिवचनात्सांसारिकफलत्वेन न मोक्षफलत्व-मित्याशङ्क्याह—

उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

उपस्थितिरुपस्थानम्। ब्रह्मोपसंपत्तिः। उपस्थिते ब्रह्मो-पसंपन्ने अतो ब्रह्मोपसंपत्तेरेव हेतोः तद्वचनात् पितृ-लोकादिप्राप्तिवचनान्न तत्सांसारिकफलम् अपि तु संसारान्मु-क्तस्यैव "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः। स स्वराड्भवति तस्य स-र्वेषु लोकेषु कामचारो भवति" इति च निवृत्ताविद्यस्य हि स्वेन रूपेणाभिनिष्पन्नस्यैव "स तत्र पर्येति" इत्युच्य-ते। अतो ब्रह्मोपसंपत्तिहेतुकत्वं संक्रीडनादेरवगम्यते॥

(तन्निर्धारणानियमाधिकरणम्।)

तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्य-

प्रतिबंधः फलम् ॥ ४१ ॥

छांदोग्ये "ओमित्येतदक्षरमुद्गीथमुपासीत" इति क-र्मांगाश्रयमुद्गीथाद्युपासनं श्रूयते। तत् किं तस्मिन्कर्मणि पर्णतादिवत् नियमेनोपादेयम् उत गोदोहनादिवत् अनियमेनेति संशयः॥ कर्मांगाश्रयत्वेन पर्णतादिवत् तद्द्वारेण निरूढकार्यत-

या"यदेव विद्यया करोति–तदेव वीर्यवत्तरम्" इति वर्तमाननिर्देशस्य पृथक्फलप्रतिपादनायोगात् क्रत्वर्थतया नियमेनोपादेयमिति पूर्वः पक्षः ॥ राद्धांतस्तु–"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्युद्गीथापासनरहितस्यापि क्रत्वनुष्ठानदर्शनात् क्रतुफलात्स्वर्गादेः पृथग्भूतवीर्यवत्तरत्वफलमिदमुपासनमिति गोदोहनादिवदनियमः । वर्तमाननिर्देशे सत्यधिकारांतरानिश्चये सति रात्रिसत्रवत् क्रतोर्वीर्यवत्तरत्वमस्योपासनस्य फलमिति कल्पनीयम् ॥ सूत्रार्थः–तन्निर्द्धारणानियमः । निर्द्धारणं निश्चयेन चेतसो धारणम् । उपासनमित्यर्थः । तस्योद्गीथोपासनस्यानियमः । कुतः । तद्दृष्टेः "तेनोभौ कुरुतः" इत्यनियमदृष्टेः । पृथग्भूत मुपासनस्य फलम् । तच्चाप्रतिबन्धरूपम् । वीर्यवत्तरत्व नाम प्रबलकर्मांतरबलेन एतस्य कर्मणः फलस्याप्रतिबन्धः । अविलंबितत्वमित्यर्थः ॥

( प्रदानाधिकरणम् । )

## प्रदानवदेव तदुक्तम् ॥ ४२ ॥

दहरविद्यायां "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति अपहतपाप्मत्वादिगुणानामपि परमात्मस्वरूपचिन्तनवत् पृथक्चिन्तनं विहितम् । किं गुणचिन्तने तत्तद्गुणविशिष्टतया परमात्मानुचिन्तनमावर्तनीयं उत नेति संशयः ॥ परमात्मन एकस्यैव सर्वेषां गुणानां गुणित्वेन सकृदेव तच्चिन्तनोपपत्तेर्नावर्तनीयमिति पूर्वः पक्षः ॥ राद्धान्तस्तु–गुणिनः स्वरूपैक्येऽपि तत्तद्गुणविशिष्टाकारादिभेदादावर्तनीयमिति ॥ सूत्रार्थः–प्रदानवदावर्तनीयमेव । यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इतीन्द्रस्यैकत्वेऽपि राजत्वादिविशिष्टाकारभे-

दादेवताभेद इति मदानाह्रत्तिः तद्वदेव । तदुक्तं संकर्षे " नाना वा देवता पृथक्त्वात् " इति ॥

( लिंगभूयस्त्वाधिकरणम् । )

## लिङ्गभूयस्त्वाद्धि बलीयस्तदपि ॥ ४२ ॥

तैत्तिरीया अधीयते " सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्, विश्वं नारायणम्" इत्यारभ्य "सोऽक्षरः परमः स्वराट्" इत्यन्तम्। अस्मिन्ननुवाके नोपासनं विधीयते। किमयं पूर्वानुवाकोदितदहरविद्योपास्यविशेषनिर्द्धारणार्थः उत सर्ववेदान्तोदितसर्वपरविद्योपास्यविशेषनिर्द्धारणार्थ इति संशयः ॥ दहरविद्याया आनन्तर्यात्तदुपास्यविशेषनिर्द्धारणार्थ इति पूर्वः पक्षः। "सहस्रशीर्षम्" इति द्वितीयानिर्देशस्यानन्तरोदितोपासिना संबन्धस्यैव युक्तत्वाच्च ॥ राद्धान्तस्तु–परब्रह्मपरतत्त्वपरज्योतिःपरमात्मासराशिवशंभुशब्दैः सर्वपरविद्योपास्यानमूद्य वाक्येनैव तेषां नारायणत्वविधानात् तस्य च प्रकरणाल्लिङ्गबलीयस्त्वेन बलीयस्त्वात् परविद्योपास्यनिर्द्धारणमिति निश्चीयते। न च "सहस्रशीर्षम्" इति द्वितीयानिर्देशः पूर्वेणोपासिना संबध्यते। "तस्मिन् यदन्तस्तदुपासितव्यम्" इति पूर्वेण कृत्प्रत्ययेन कर्माभिहितमिति तत्र द्वितीयानिर्देशायोगात्। " नारायणः परः । व्याप्य नारायणः स्थितः । परमात्मा व्यवस्थितः " इत्यादिभिरैकार्थ्यात्प्रथमार्थे द्वितीया ॥ सूत्रार्थः—सर्वविद्योपास्यनिर्द्धारणे लिङ्गभूयस्त्वाचस्य चिन्हभूतवाक्यभूयस्त्वादित्यर्थः तद्धि वाक्यं प्रकरणाद्बलीयः । तदपि पूर्वस्मिन्काण्डे " श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम्" इत्यादिनोक्तम्। एवं सर्वोपा-

स्यनिर्द्धारणे निश्चिते सति दहरविद्यायामपि अयमेवोपास्य इति "पद्मकोशप्रतीकाशम्" इत्यादिना हृदयाद्यभिधानं च युज्यत इत्यभिप्रायः ॥

( पूर्वविकल्पाधिकरणम् । )

पूर्वविकल्पः प्रकरणात्स्यात् क्रिया मानसवत् ॥ ४४ ॥

वाजसनेयके अग्निरहस्ये "मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः" इत्यादिना मनश्चितादयोऽग्नयो विद्यारूपाः श्रूयन्ते। किमेते क्रियामयक्रत्वङ्गभूता उत विद्यामयक्रत्वङ्गभूता इति संशयः ॥ अस्मिन्प्रकरणे विद्यामयक्रत्वनुबन्धिग्रहस्तोत्राद्यदर्शनेऽपि क्रतोर्विधानाभावात् फलान्तराप्रतीतेश्च पूर्वत्र "असद्वा इदमग्र आसीत्" इत्यादिना इष्टकचितस्याग्नेः प्रकृतत्वान्मनश्चितादिषु च "तेषामेकैक एव तावान् यावानसौ पूर्वः" इति तत्कार्यातिदेशादिष्टकचितेनैषां विकल्प प्रतीतेश्च इष्टकाचिताग्निशेषभूतक्रियामयक्रत्वनुप्रवेशेन तदङ्गभूता इति पूर्वः पक्षः ॥ राद्धान्तस्तु—"ते हैते विद्याचित एव विद्यया हैवैत एवं विदश्चिता भवन्ति" इति मनश्चितादीनां सांपादिकाग्नित्वेन विद्यारूपत्वे सिद्धेऽपि "ते हैते विद्याचित एव" इति श्रुतिर्विद्यामयक्रत्वङ्गत्वमेषां विद्यारूपतामवगमयतीति निश्चयात् सन्निहितैर्मानसैर्ग्रहस्तोत्रादिभिः क्रत्वनुबन्धैरनुवादवाक्यसरूपवाक्यप्रतिपादितैः क्रतुदर्शने सति "वचनानि त्वपूर्वत्वात्" इति न्यायेन मनश्चितादीनां शेषभूतविद्यामयक्रतोर्विधिः परिकल्प्यते। "तेषामेकैक एव तावान् यावानसौ पूर्वः" इति अतिदेशेनेष्टकाचिताग्नेः

स्वशेषिभूतक्रतुद्वारेण यत्फलं तदेवैषां स्वशेषिभूतविद्यामयक्रतुद्वारेण फलमिति निश्चीयत इति विद्यामयक्रत्वङ्गभूता एव मनश्चितादयः॥ सूत्रार्थः—मनश्चितादिः क्रिया स्यात् क्रियामयक्रत्वङ्गभूत इत्यर्थः। कुतः। प्रकरणात्। पूर्वप्रकृतेनेष्टकचितेनाव्यभिचारितक्रतुसम्बन्धिनोपस्थितक्रतुगृहीतत्वेन तदङ्गभूतः। एषाञ्चाग्नित्वाचेनेष्टकाचितेन विकल्पः। विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गभावो न विरुध्यते द्वादशाहांगभूतमानसग्रहवत्॥

## अतिदेशाच्च॥ ४५॥

"तेषामेकैक एव तावान् यावानसौ पूर्वः" इति तेषु पूर्वेष्टकचितकार्यातिदेशाच्च तेनैषां विकल्पः प्रतीयते। तेन विकल्पो हि तच्छेषिभूतक्रत्वङ्गत्वेन विनैषां नोपपद्यते। अतश्च तदङ्गभूताः॥

## विद्यैव तु निर्धारणाद्दर्शनाच्च॥ ४६॥

तुशब्दः पक्षं व्यावर्तयति। मनश्चितादिर्विद्यैव विद्यामयक्रत्वङ्गभूत एवेत्यर्थः। कुतः। निर्धारणात्। तेषां विद्यारूपत्वे सिद्धेऽपि "ते हैते विद्याचित एव" इति निर्धारणं विद्यामयक्रत्वङ्गतयैषां विद्यामयत्वख्यापनार्थम्। अत्रैव विद्यामयक्रतुदर्शनाच्च तदङ्गत्वमेवैषाम्। दृश्यते च विद्यामयक्रतुः "मनसैव ग्रहा गृह्यन्ते मनसा स्तुवन्ति मनसा शंसन्ति" इत्यादौ॥

अत्र विद्यामयक्रतौ विधिपदाश्रवणात् तत्फलसम्बन्धाप्रतीतेश्च प्रकरणेनेष्टकचिताभ्युपस्थापितक्रत्वङ्गताप्रतीतेश्च विद्यामयक्रत्वङ्गता बाध्यत इत्याशङ्क्याह—

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

श्रुत्यादेः प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतस्य विद्यामयक्रत्वन्वयस्य प्रकरणेन न बाधः । श्रुतिस्तावत् " ते हैते विद्याचिन एव" इति । तां विवृणोति "विद्यया हैवैत एवं विदश्चिता भवन्ति" इति । लिङ्गवाक्ये च भाष्ये दर्शिते । एवं विदो मनश्चक्षुरादिव्यापारेषु अग्नित्वं सम्पादयितुः एते मनश्चितादयो विद्यया प्रधानभूतया चिता भवन्तीत्यर्थः ॥

"मनसैव ग्रहा गृह्यन्ते" इत्यादौ विधिपदाश्रवणाद्विद्यामयक्रतुविधिर्न संभवति, तदसंभवादेव तदन्वयोपि न संभवतीत्याशङ्क्याह—

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥

ग्रहस्तोत्रशस्त्रेभ्यो यज्ञानुबन्धेभ्य इष्टकचितान्वयिनः क्रतोरत्र विधीयमानविद्यामयक्रतुपृथक्त्वमवगम्यते । प्रज्ञान्तरपृथक्त्ववत् यथा प्रज्ञान्तराणां दहरादिविद्यादीनां पृथक्त्वहेतुभ्यः पृथक्त्वम् । आदिशब्दात्पूर्वोक्तश्रुत्यादि गृह्यते । श्रुत्यादिनाऽनुबन्धैश्च विद्यामयक्रतुविधिः परिकल्प्यत इत्यर्थः । दृष्टश्चानुवादसरूपेऽपि कल्प्यमानो विधिः "यदेव विद्यया करोति"इत्यादौ । तदुक्तं " वचनानि त्वपूर्वत्वात् " इति ।

यत्तूक्तमतिदेशाचेष्टकाचितशेषिभूतक्रत्वन्वयो गम्यत इति तत्राह—

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥४९॥

नावश्यमतिदेशेनेष्टकाचिताग्नितुल्यदेशत्वमप्याश्रयणीयम् ।

येन केन चित्सामान्येनातिदेशोपलब्धेः। "स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः"इतिवत्फलसामान्येन भविष्यत्यतिदेशः। न हि तत्र मण्डलपुरुषे मृत्युलोकापत्तिरप्यतिदिश्यते। अपि तु मृत्युवत्सर्वहरत्वमेव ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेन तस्य मनश्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं तद्विधत्वं विद्यामयप्रतिपादकत्वमवगम्यते। परेण हि ब्राह्मणेन"अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव"इत्यादिना पृथक्फला विद्यैव विधीयते। अग्निरहस्ये क्रिया एव विधीयन्त इति नास्ति नियम इत्यर्थः। क्रियाप्रकरणे त्वेषां मनश्चितादीनामनुबन्धः सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् क्रियते। अतो 'विद्यामयक्रत्वङ्गभूता एव मनश्चितादयोऽग्नयः।

( शरीरेभावाधिकरणम्। )

एक आत्मनः शरीरे भावात् ॥ ५१ ॥

प्रत्यगात्मन आत्मतया परमात्मोपास्यः,उपासकस्यापि स्वरूपमुपास्योपासनस्वरूपवत् ज्ञातव्यमिति ह्युक्तम् "वपाणाम्" इत्यादिना। वक्ष्यते च "आत्मेति तूपगच्छन्ति"इति। तत्र किं प्रत्यगात्मनः शरीरे वर्तमानस्य कर्तृत्वभोक्तृत्वादिविशिष्टं रूपमनुसन्धेयमुत प्रजापतिनावयोदितापहतपाप्मत्वादिगुणकं यथावस्थितरूपमिति संशयः ॥ शरीरे वर्तमानस्य यादृशं रूपं तदेवानुसन्धेयमिति पूर्वपक्षः। कर्मविधिष्विवोपासनविधावपि तावतैव साधनानुष्ठानफलानुभवयोः संभवात्। "यथा क्रतुरस्मिल्लोके पुरुषः"इति तु 'तं यथा यथोपा-

सते'इत्यनेनैकाप्यर्यात्परमात्मविषयम् ॥ राद्धान्तस्तु–"तत्त्वमसि। स त आत्माऽन्तर्याम्यमृतः" इति प्रत्यगात्मन आत्मतयैव परमात्मोपास्य इति प्रत्यगात्मनः स्वरूपमप्युपासनान्तर्गतम्। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते"इति यथावस्थितात्मस्वरूपस्यैव ब्रह्मानुभवः फलमित्यतः "यथा क्रतुरस्मिल्लोके पुरुषः"इति न परमात्ममात्रविषयम्, अपि तु प्रत्यगात्मात्मभूतोपास्यविषयमिति प्रजापतिवाक्योदितं यथावस्थित स्वरूपमेवानुसन्धेयम्। अन्यथा प्राप्योपास्ययोः प्रकारभेदात् "यथा क्रतुः"इति विरुध्येत। "यजेत स्वर्गकामः"इत्यादिकर्मविधौ तु कर्तृस्वरूपानुसन्धानं न साधनान्तर्गतमिति विशेषः ॥ सूत्रार्थस्तु—कर्तृत्वादिविशिष्टमेवात्मनः स्वरूपमनुसंधेयमित्येके मन्यन्ते। कुतः। शरीरे वर्तमानस्योपासितुरात्मनस्तथाभावात् ॥

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न कर्तृत्वादिविशिष्टमनुसन्धेयम्। अपि तु सांसारिकस्वरूपान्मुक्तस्वरूपस्य यो व्यतिरेकः सोऽनुसन्धेयः। कुतः। तथोपासनभावित्वात्प्राप्तिरिक्तस्वरूपप्राप्तेः । "यथा क्रतुरस्मिल्लोके" इति ह्याह। उपलब्धिवत् यथा ब्रह्मस्वरूपोपलब्धिर्यथावस्थितब्रह्मानुसन्धानयुक्तस्यैव तथात्मोपलब्धिरपि ॥

( अङ्गावबद्धाधिकरणम् । )

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथादिक्रत्वङ्गाश्रया उपासनाः श्रूयन्ते। ताः किं यासु शाखासु श्रूयन्ते तास्वेव व्यवस्थिता उत सर्वासु शाखासु संबद्धा इति संशयः ॥ शाखासु

स्वरभेदात् प्रतिशाखमुद्गीथभेदात् यत्र श्रूयन्ते तत्रस्थोद्गीथादेः संनिधानात्तेनैवान्विता व्यवस्थिता इति पूर्वः पक्षः ॥ राद्धान्तस्तु—यद्यप्युद्गीथव्यक्तिभेदो विद्यते तथापि तत्र तत्र चोद्गीथजातीयत्वेन संबन्धात् सर्वेषां चोद्गीथजातीयत्वाविशेषात् "उद्गीथमुपासीत" इति श्रुत्यैव सर्वसंबन्ध इति सर्वशाखासु संबध्यन्ते ॥ सूत्रार्थः—न त्वङ्गावबद्धा उपासनास्तासु व्यवस्थिताः, अपि तु प्रतिवेदं सर्वशाखासु संबध्यन्त इत्यर्थः । हीति हेतौ । यस्मादुद्गीथजातीयत्वाविशेषेण सर्वसंबन्धस्तस्मादित्यर्थः ॥

मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥

वाशब्दश्चार्थे । यथा मन्त्रादीनां क्रत्वङ्गभूतानामेकैकशाखावगतानां सर्वशाखासु क्रतोरेकत्वेन सर्वत्र सम्बन्धो न विरुध्यते तद्वदविरोधः ॥

( भूमज्यायस्त्वाधिकरणम् )

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५५॥

वैश्वानरविद्यायां स्वर्लोकादित्यवाय्वाकाशपृथिव्यवयवो वैश्वानरात्मोपास्यः श्रुतः । तत्र किं व्यस्तस्यैवोपासनं कार्यमुत व्यस्तस्य समस्तस्य चाथ समस्तस्यैवेति संशयः ॥ "औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्"इत्यादिना स्वर्लोकादिपृथिव्यन्तानां वैश्वानरात्मनो मूर्धादिपादान्तावयवत्वमभिधाय तत्र तत्र व्यस्तस्यैवोपासनं फलं च विहितमिति पश्चात् "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते"इति पूर्वोक्तस्य समासेनोपसंहार इति युक्तम् । अतो व्यस्तस्यैवोपास

नं कार्यमिति प्रथमः पक्षः ॥ समस्तोपासनस्य "सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु चान्नमत्ति" इति व्यस्तोपासनफलेभ्यः फलान्तरविधानाद्व्यस्तस्य समस्तस्य चोपासनं कार्यमिति द्वितीयः पक्षः ॥ राद्धान्तस्तु—"आत्मनं वैश्वानरं संप्रत्यध्येषितमेव नो ब्रूहि" इत्यारभ्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वमभिधाय "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु" इत्युपसंहारादेकस्यैव वैश्वानरात्मनस्त्रैलोक्यशरीरस्य परस्य ब्रह्मण उपासनं विधाय फलं च "सर्वेष्वात्मसु चान्नमत्ति" इति "तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च सर्वेषामात्मनामविशेषेण भोग्यभूतं परं ब्रह्मानुभवति तद्विरोधिनश्च सर्वपाप्मनस्तरतीत्युक्तमिति गम्यते। अत एकवाक्यत्वात्समस्तस्यैवोपासनं कार्यम्। व्यस्तवादस्तु स्वर्लोकादीनां मूर्धाद्यवयवत्वज्ञापनार्थः। तत्र तत्र फलवादः "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति" इत्यादिवद्द्रष्टव्यः ॥ सूत्रार्थः—भूम्नो ज्यायस्त्वं समस्तोपासनस्य ज्यैष्ठ्यं प्रामाणिकत्वमित्यर्थः। एकवाक्यत्वावगतेः। व्यस्तवादः क्रतुवद्द्रष्टव्यः। "वैश्वानरं द्वादशकपालं निर्वपेत्—यदष्टाकपालः" इत्यादिक्रताविवेत्यर्थः। तथा हि दर्शयति समस्तोपासनस्य ज्यायस्त्वमेव दर्शयति श्रुतिः "मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः" इत्यादिना व्यस्तोपासनेऽनर्थं ब्रुवन्ती।

( शब्दादिभेदाधिकरणम् )

## नाना शब्दादिभेदात् ॥ ५६ ॥

सद्विद्यादहरविद्याशाण्डिल्यविद्याभूमविद्यादिका ब्रह्मो-

पासनरूपा ब्रह्मप्राप्तिफला किमेकविद्या उत नानेति संशयः ॥ उपास्यस्य ब्रह्मणः फलस्य चैकत्वात् वेदोपासीतेति च पर्यायत्वादेकविद्येति पूर्वपक्षः ॥ ब्रह्मैकत्वेऽपि जगदेककारणत्वापहतपाप्मत्वाद्यनुबन्धभेदहेतुभिः पूर्वकाण्डोदितशब्दान्तरादिभिरेवानुबन्धभेदमापन्ना नानाभूता विद्येति राद्धान्तः । शब्दान्तरादिभिस्तत्रतत्रोदितैरेव विद्याभेदसिद्धावपीह पुनर्वचनं ब्रह्मप्राप्तिहेतुभूतं वेदान्तोदितं ज्ञानमविधेयमिति कुदृष्टिनिरासार्थम् ॥ सूत्रार्थः—सद्विद्याभूमविद्यादिका नानाभूताः । ब्रह्मण एकत्वेपि सद्भूमापहतपाप्मेतिशब्दभेदात् । आदिशब्दादभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते ॥

( विकल्पाधिकरणम् । )

विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

सद्विद्याभूमविद्यादिकानां ब्रह्मप्राप्तिफलानामेकस्मिन्पुरुषे समुच्चयोऽपि संभवति नेति संशयः ॥ अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनां स्वर्गैकफलानां तत्र भूयस्त्वापेक्षया यथैकस्मिन्पुरुषे समुच्चयो दृश्यते तथेहापि ब्रह्मानुभवभूयस्त्वापेक्षयैकस्मिन्पुरुषे समुच्चयः संभवतीति पूर्वः पक्षः ॥ देशतः कालतः स्वरूपतश्चानवच्छिन्नानन्दस्वरूपब्रह्मानुभवः सर्वासां परविद्यानां फलम् । तच्चैकया विद्ययाऽवाप्तमिति एकस्मिन्पुरुषे विद्यान्तरसमुच्चयः प्रयोजनाभावाच्च न संभवतीति सर्वासां विकल्प इति राद्धान्तः ॥ सूत्रमपि व्याख्यातम् ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

ब्रह्मप्राप्तिव्यतिरिक्तफला विद्याः काम्याः । तास्तु यथेष्टं समुच्चीयेरन् विकल्पेरन्वा । पूर्वहेत्वभावात् फलस्य परिमितत्वात् भूयस्त्वापेक्षया समुच्चयः संभवतीत्यर्थः ॥

( यथाश्रयभावाधिकरणम् । )

अङ्गेषु यथाश्रयभावः ॥ ५९ ॥

कर्माङ्गाश्रयाणामुद्गीथाद्युपासनानां गोदोहनादिवदधिकारान्तरत्वेनोपादानानियमः पूर्वोक्तः संभवति नेति संशयः ॥ न संभवतीति पूर्वः पक्षः । 'उद्गीथमुपासीत'इत्युपासनविधौ फलान्तराश्रवणादुद्गीथसम्बन्धावगतक्रत्वङ्गभावाविरोधात् । एवं विधिवाक्येनैव क्रत्वङ्गभावेऽवगते सति "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्"इति च वर्तमाननिर्देशो "न स पापं श्लोकं शृणोति"इतिवदर्थवादमात्रं स्यात् ॥ राद्धान्तस्तु—"यदेव विद्यया करोति—तदेव वीर्यवत्तरम्"इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साक्षात्साधनभावोऽवगम्यते । एवं फलसाधनतयाऽवगता विद्या किमाश्रित्य फलं करोतीत्यपेक्षायाम् "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथमाश्रित्य कुर्यादिति क्रत्वङ्गभूतोद्गीथाश्रयत्वमात्रं प्रतीयते । अतः फलान्तरसाधनतयाऽवगतस्य क्रत्वङ्गभावो नोपपद्यत इति गोदोहनादितुल्यतयोपादानानियमः सिध्यत्येव । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति"इत्यत्र तु पर्णताया जुहूसम्बन्धात्प्रागपापश्लोकश्रवणं प्रति साक्षात्साधनभावो न श्रूयते । पर्णतासम्बन्धिपुरुषसम्बन्धमात्रं श्रुतम् । तत् "पर्णमयी जुहूः"इति श्रुत्यैव प्रथमावगतं क्रत्वङ्गभावं न विरुणद्धीत्यर्थवादमात्रमिति विशेषः ॥ सूत्रार्थः—अङ्गेषूद्गीथादिष्वाश्रिता-

नामुपासनानां यथाश्रयभावः उद्गीथादिवदङ्गभावः। गोदोह-नादिवत् तत्समन्वाक्ये फलसम्बन्धाश्रवणादङ्गभावो न विरु-ध्यत इत्यर्थः॥

## शिष्टेश्च ॥ ६० ॥

शिष्टिः शासनं विधानम्। "उद्गीथमुपासीत" इति विधाना-च्च वर्तमाननिर्देशावगतफलसम्बन्धात्मागेवोद्गीथसम्बन्धोऽवगत इति तदङ्गभावो न विरुध्यते। अत उपादाननियमः॥

## समाहारात् ॥ ६१ ॥

इतश्च। "होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इ-त्युद्गीथ वेदनहानावन्येन समाधानं ब्रुवती श्रुतिर्वेदनस्योपादान-नियमं दर्शयति। दुरुद्गीथं वेदनहीनमुद्गीथम्॥

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

इतश्चोपादाननियमोऽवगम्यते। प्रणवगुणत्वेनावगतस्यो-पासनस्य साधारण्यं श्रूयते "तेनेयं त्रयी विद्या वर्तते ओमि-त्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति। तेनेति प्रकृ-तपरामर्शात्सोपासन एव प्रणवः सर्वत्र संचरति। अतः प्रण-वसहभावनियमदर्शनादुपादाननियमो निश्चीयते॥

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न वोपादाननियमः। तत्सहभावाश्रुतेः। क्रत्वङ्गभावा-श्रुतेरित्यर्थः। क्रत्वङ्गभावो हि सहभावः। "यदेव विद्यया क-रोति—तदेव वीर्यवत्तरम्" इति वीर्यवत्तरत्वसाधनतयाऽवग-ताया विद्यायाः क्रत्वङ्गतया विनियोगासम्भवात् तदङ्गभावो

हि न श्रूयते। यत्र साक्षात्फलसाधनत्वं प्रतिपाद्यते तत्र फलसाधनत्वं प्रथमं प्रतीयत इति तस्य क्रत्वङ्गतया विनियोगो न सम्भवतीत्यभिप्रायः॥

दर्शनाच्च ॥ ६४ ॥

"एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति ब्रह्मणो वेदनेन यज्ञस्य यजमानस्य ऋत्विजां च रक्षणं ब्रुवन्नन्येषां वेदनाभावं दर्शयति। तच्चोद्गीथोपासनस्यानङ्गत्वे सत्येवोपपद्यते। अतश्चोपादानानियमः॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे तृतीयस्याध्यायस्य तृतीयः पादः।

(पुरुषार्थाधिकरणम्)

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

किं विद्यातः पुरुषार्थ उत कर्मण इति संशयः॥ कर्मण इति पूर्वः पक्षः। कर्माङ्गत्वाद्विद्यायाः कर्मसु कर्तृभूतप्रत्यगात्मनो याथात्म्यप्रतिपादनपराणि वेदान्तवाक्यानि। विद्यायाः कर्माङ्गत्वं च "यदेव विद्यया करोति—तदेव वीर्यवत्तरम्" इति श्रुत्याऽवगम्यते। न च प्रकृतोद्गीथोपासनविषयत्वमस्या वक्तुं शक्यते। "यदेव विद्यया करोति" इति श्रुत्यैव सर्वकर्मसु विद्याया विनियुक्तत्वात्। श्रुतिश्च प्रकरणाद्बलीयसी। विद्यायाः कर्माङ्गत्वं कथमित्यपेक्षायाम् "तत्त्वमसि। अयमात्मा ब्रह्म" इति सामानाधिकरण्येन कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धानद्वारेण विद्यायाः कर्माङ्गत्वमित्यवगम्यते। अतः कर्तृसंस्कारत्वाद्ब्रह्मविद्यायाः

कर्मण एव पुरुषार्थः। तत्र तत्र फलश्रुतिरर्थवादः स्यात्। विद्यायाः कर्माङ्गत्वे भूयांसि लिङ्गानि च दृश्यन्ते सर्ववेदान्तेषु॥ राद्धान्तस्तु—कर्मसु कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य निखिलहेयप्रत्यनीककल्याणैकतानानन्दैकस्वरूपस्य सर्वेश्वरस्य सत्यसङ्कल्पस्य करणाधिपाधिपस्य वेद्यस्य वेदनरूपाया विद्यायाः "ब्रह्मविदाप्नोति परम्" इत्यादिषु ब्रह्मप्राप्तिरूपफलोपदेशात् विद्यात एव फलम्। "यदेव विद्यया करोति" इति श्रुतिः प्रसिद्धवन्निर्देशात् प्रसिद्धिश्च प्रकृतोद्गीथोपासनस्यैवेति प्रस्तुतोद्गीथोपासनविशेषनिष्ठा। "तत्त्वमसि" इति सामानाधिकरण्यं च तच्छब्दनिर्दिष्टस्वसङ्कल्पकृतजगज्जन्मस्थितिध्वंसाधिकरणस्य परस्य ब्रह्मणो न जीवस्वरूपत्वपरम्। अपि तु जगत्कारणस्य ब्रह्मणो जीवशरीरकतया जीवस्यात्मत्वपरमिति "अधिकं तु भेदनिर्देशात्" इत्यादिपूक्तम्। "य आत्मनि तिष्ठन्—यस्यात्मा शरीरम्" इति च प्रत्यगात्मन आत्मत्वं परस्य ब्रह्मणः श्रुत्यन्तरे व्यक्तम्॥ सूत्रार्थः—पुरुषार्थो न विद्यातः। कुतः। "ब्रह्मविदाप्नोति परम्" इत्यादिशब्दात्॥

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः॥ २॥

"तत्त्वमसि" इत्यादिना सामानाधिकरण्येन ब्रह्मणः कर्मसु कर्तृस्वरूपत्वावगमात् विद्यायाः कर्तृसंस्कारद्वारेण कर्मशेषत्वात्तत्र पुरुषार्थवादोऽर्थवादमात्रम्, यथान्येषु द्रव्यसंस्कारादिष्विति जैमिनिराचार्यो मन्यते॥

आचारदर्शनात्॥ ३॥

इतश्च विद्या कर्माङ्गम्। ब्रह्मविदामाचारो हि कर्मप्रधानो

दृश्यते। यथाश्वपतिःकेकयो ब्रह्मविदग्रेसरो "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्याह। "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च स्मर्यते॥

लिङ्गमिदं श्रुतिरुच्यतामित्यत्राह—

तच्छ्रुतेः॥ ४॥

"यदेव विद्यया करोति" इत्यादिकायाः श्रुतेर्विद्यायाः कर्माङ्गत्वमवगम्यते। न च दुर्बलेन प्रकरणेन श्रुतिर्विद्यासामान्यविषयोद्गीथोपासनविशेषे व्यवस्थाप्यते॥

समन्वारम्भणात्॥ ५॥

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यं च विद्यायाः कर्माङ्गत्वे सत्येव भवति॥

तद्वतो विधानात्॥ ६॥

विद्यावतः कर्मविधानाच्च विद्या कर्माङ्गम्। "आचार्यकुलाद्वेदमधीत्याभिसमावृत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे" इत्यादिनाऽध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्तत्वादध्ययनस्य विद्यावत एव कर्माणि विदधातीत्यवगम्यते॥

नियमाच्च॥ ७॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदामायुषः कर्मसु नियमदर्शनाच्च कर्मण एव पुरुषार्थः, न विद्यात इत्यवगम्यते। अतश्च विद्या कर्माङ्गम्॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दात्पक्षो व्यावृत्तः । न विद्या कर्माङ्गमपि तु विद्यातः पुरुषार्थः । बादरायणस्यैवं विद्यातः फलमिति मतम् । कुतः । अधिकोपदेशात्कर्मकर्तुः प्रत्यगात्मनोऽधिकस्यार्थान्तरभूतस्य वेद्यस्य वेदनरूपविद्यायाः फलसाधनत्वोपदेशात् । तद्दर्शनात् दृश्यते हि वेदान्तवाक्येऽधिकविषयत्वं विद्यायाः । एवमेव हि "तदैक्षत बहु स्यां प्रजायेयेति । सोऽकामयत बहुस्यां प्रजायेय" इत्यादिषु बहुभवनसङ्कल्पपूर्वकसृष्ट्यादेः कर्तुः सर्वेश्वरस्य करणाधिपाधिपस्यानवधिकातिशयज्ञानानंदैकरूपस्य निखिलहेयप्रत्यनीकस्य वेद्यस्य विद्या ब्रह्मप्राप्तिफलाय विधीयते ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

विद्यायाः प्रधानत्वेऽपि ब्रह्मविदामाचारदर्शनं तुल्यम् । कर्मणामनाचारदर्शनमप्यस्तीत्यर्थः "ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ । कर्मानुष्ठानं तु फलाभिसन्धिरहितस्य कर्मणो विद्याङ्गत्वात् । त्यागस्तु फलाभिसन्धियुक्तस्य विद्याविरोधित्वादित्यभिप्रायः ॥

## असार्वत्रिकी ॥ १० ॥

"यदेव विद्यया करोति" इति श्रुतिः सर्वविद्यायाः कर्माङ्गत्वं विदधातीत्येतदसङ्गतम् । अत्र विद्या शब्दाभिहिता तु न सार्वत्रिकी । अपि तूद्गीथविद्या । "यत्करोति तद्विद्यया" इति नैवं पदान्वयः । अपि तु "यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इति । विद्यया क्रियमाणस्यान्यतोऽवगतस्य वीर्यवत्तरत्वं प्रति साधनभावो गम्यते । यदेवेति प्रसिद्धवन्निर्देशात् । अन्यतोऽव-

गतिर्हि "उद्गीथमुपासीत" इति सन्निहितोद्गीथविद्यायाः ॥

विभागः शतवत् ॥ ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्र विद्या च स्वस्मै फलाय कर्म च स्वस्मै फलायान्वारभत इति विभागो द्रष्टव्यः । यतो विद्याकर्मणाभिन्नफलत्वमुक्तम् । शतवद् यथा क्षेत्ररत्नविक्रयिण शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शत रत्नार्थं शतमिति विभागो गम्यते तद्वत् ॥

अध्ययनमात्रवतः ॥ १२ ॥

"वेदमधीत्य" इत्यध्ययनमात्रवत एव कर्मविधानादनेन विद्याया न कर्माङ्गत्वमवगतम् । अध्ययनविधिर्हि आधानवदक्षरराशिग्रहणमात्रे पर्यवस्यति । गृहीतस्य स्वाध्यायस्य फलवदर्थावबोधित्वदर्शनात्तन्निर्णयफलमीमांसाश्रवणे अधीतवेदः स्वयमेव प्रवर्तते । अर्थावबोधपर्यन्तत्वेऽपि अर्थज्ञानादर्थान्तरभूता प्रत्ययावृत्तिरूपा "विद्यात् उपासीत" इति शास्त्रविहिता विद्या न कर्माङ्गम् ॥

नाविशेषात् ॥ १३ ॥

"कुर्वन्नेवेह कर्माणि" इति ब्रह्मविदायुषः कर्मनियमो दृश्यत इत्येतन्न सम्भवति । अविशेषात् विदुष एवेति विशेषाभावात् । किमित्यविदुषो न स्यात् । विदुषस्त्वाप्रयाणाद्रुपासनानुवृत्तिदर्शनादर्थस्वभावाद्विदुष एवत्यभिप्रायः ॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

वाशब्दोऽवधारणे । "ईशावास्यमिदं सर्वम्" इति विद्याप्र-

करणात् विद्यास्तुतये कर्मानुमतिरेव । विद्यामहात्म्यात्सर्वदा कर्माणि कुर्वन्नपि तेन लिप्यते इति हि स्तुतौ भवति विद्या । वाक्यशेषे च "न कर्मणा लिप्यते नरः" इति श्रूयते ॥

कामकारेण चैके ॥ १५ ॥

एके शाखिनः कामकारेण च विद्यानिष्ठस्य गार्हस्थ्यासामधीयते "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति गार्हस्थ्यकर्मत्यागं ब्रुवती विद्या प्रधानमिति दर्शयति ॥

उपमर्दञ्च ॥ १६ ॥

विद्यया सर्वकर्मोपमर्दनं च विधीयते "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति । तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥

ऊर्द्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्द्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात् तेषु चाग्निहोत्रादिकर्माभावाच्च विद्याकर्माङ्गम् । ते च आश्रमाः सन्त्येव । यतो वैदिके शब्दे तेऽपि दृश्यन्ते " त्रयो धर्मस्कन्धाः । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति " इत्यादौ । "यावज्जीवमग्निहोत्रम्" इत्यादिका तु श्रुतिरविरक्तविषया ॥

परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥

" त्रयो धर्मस्कन्धा " इत्यादिषु तेषामाश्रमाणामचोदनादविधानादुपासनास्तुत्यर्थं परामर्शमनुवादं जैमिनिराचार्यो मन्यते । अपि चापवदति श्रुतिराश्रमान्तरं " वीरहा वा एष

देवानां योऽग्निमुद्रासयते" इत्यादिका । अतस्ते न सन्त्येव ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः । तस्यापि तत्साम्यश्रुतेः । "त्रयो धर्मस्कन्धाः" इत्येवमादौ हि सर्वेषामाश्रमाणामेकरूपं कीर्तनम् ॥

विधिर्वा धारणवत् ॥ २० ॥

वाशब्दोऽवधारणे । सर्वेषामाश्रमाणां विधिरेवायम् । धारणवत् यथा "अधस्तात्समिधं धारयन्ननुद्रवेत् । उपरि हि देवेभ्यो धारयति" इत्यनुवादरूपेऽप्युपरिधारणस्याप्राप्तत्वेन विधिराश्रीयते एवमिहाश्रमाणामपि । अत ऊर्ध्वरेतस्स्वपि विद्यादर्शनाद्विद्यातः पुरुषार्थ इति ॥

( स्तुतिमात्राधिकरणम् )

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत–स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" इत्येवंजातीयके किं कर्माङ्गाश्रयाणां दृष्टीनिशेषाणां विधिराश्रयणीय उत उद्गीथादिस्तुतिमात्रमिति संशयः ॥ विधित्वे सिद्धे हि गोदोहनादिवत् भवति, विधित्वमेव न सम्भवतीति पूर्वः पक्षः । "इयमेव जुहूर्यत्स्वर्गलोक आहवनीयः" इतिवत्कर्माङ्गभूतोद्गीथादिसम्बन्धितयोपादानाद्रसतमत्वादिस्तत्स्तुतिमात्रमेव न रसतमत्वादिदृष्टिविधिः ॥ राद्धान्तस्तु– जुह्वादिवैधिवदुद्गीथादिविधेरत्रासंनिधानाद्रसतमत्वादेरप्राप्तत्वा-

म्र उपासीतेति विधिप्रत्ययेन च न स्तुतिमात्रं तद्दृष्टिविधिरेव ॥ सूत्रद्वयं व्याख्यातम् ॥

( पारिप्लवार्थाधिकरणम् )

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

तथा चैकवाक्योपबन्धात् ॥ २४ ॥

"प्रतर्दनो ह वै दैवोदासिः" इत्यादयो वेदान्तेष्वाख्यानविशेषाः किं पारिप्लव(१)प्रयोगार्था उत तत्र तत्र विद्या विशेषप्रतिपादनार्था इति संशयः ॥ " आख्यानानि शंसंति " इत्याख्यानानां पारिप्लवे विनियोगात्तदर्था इति पूर्वः पक्षः॥ राद्धान्तस्तु–" आख्यानानि शंसन्ति " इत्युक्त्वा "मनुर्वैवस्वतो राजा" इति मन्वाद्याख्याने विनियोगस्य विशेषितत्वात् " तं मामायुरमृतमित्युपास्व । आत्मा वा अरे द्रष्टव्यः " इत्यादिविधिनैकवाक्यत्वाच्च " सोऽरोदीत् " इत्यादिवत् विद्याविध्यर्थमेव ॥ सूत्रद्वयमपि व्याख्यातम् ॥

( अग्नीन्धनाधिकरणम् )

अत एव चाग्नींधनाद्यनपेक्षा ॥ २५ ॥

ऊर्द्ध्वरेतस्त्वाश्रमेषु ब्रह्मविद्या सम्भवति नेति संशयः ॥ यज्ञाद्यभावात्तेषां तदङ्गिका विद्या न सम्भवतीति पूर्वपक्षः ॥ राद्धान्तस्तु—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति " इत्यादिश्रुतिभिस्तेषां विद्यावत्त्वावगमात् तेष्वग्निहोत्राद्यनपेक्षा विद्येति निश्चीयते ॥ सूत्रार्थः– अत एव विद्यावत्त्वश्रुतेरेव आधानाद्यनपेक्षा तेषु विद्या । अग्नींधनं त्वाधानम् ॥

---

( १ ) पारिप्लवो नाम यज्ञे ऋत्विग्भिः क्रियमाणा शंसनरूपा स्तुतिः।

( सर्वापेक्षाधिकरणम् )

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

कर्मवत्सु गृहस्थेषु किं यज्ञादिकर्मापेक्षा विद्या उत तत्रापि केवलैवेति संशयः ॥ ऊर्द्ध्वरेतस्सु यज्ञाद्यनपेक्षैव अमृतत्वं साधयति चेत्कर्मानिरपेक्षाया एव साधनत्वमभ्युपगमनीयम्, तथा सति गृहस्थेष्वपि तन्निरपेक्षैव साधयितुं समर्थेति पूर्वपक्षः । न हि स्वर्गादिसाधनभूतमग्निहोत्रादिकर्म पुरुषभेदेन नानाविधाङ्गकं दृष्टम् । विविदिषन्तीति शब्दोऽपि वेदनेच्छायामेव कर्माणि विनियुंक्ते, न विद्यायाम् ॥ राद्धान्तस्तु—कर्मवत्सु गृहस्थेषु यज्ञादिसर्वकर्मापेक्षा विद्या । कुतः । यज्ञादिश्रुतेः । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति हि यज्ञादयो विद्याङ्गत्वेन विनियुज्यन्ते । अतो गृहस्थेषु तदपेक्षा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमेव तदङ्गकमित्यर्थतोऽवगम्यते । यथाऽश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धरूपपरिकर्मापेक्ष एव मोक्षसाधनभूतविद्या नित्यनैमित्तिकपरिकर्मापेक्षा । ऊर्द्ध्वरेतस्सु च स्वाश्रमविहितकर्मैव परिकर्म भवतीति तेष्वपि विद्यासम्बन्धः शास्त्रादवगम्यते । शास्त्रैकसमधिगम्ये हि यथाशास्त्रमभ्युपगन्तव्यम् ॥ सूत्रमपि व्याख्यातम् ॥

( शमदमाद्यधिकरणम् )

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

किं विद्यानिष्पत्तये गृहस्थैः शमदमादय उपादेया उत नेति संशयः ॥ गृहस्थानां करणव्यापाररूपकर्माङ्गत्वाद्विद्यायाः तद्विपरीतरूपशमदमाद्युपादानासामर्थ्यादूर्द्ध्वरेतःसु कर्मरहितेषु शमदमादिविनियोगो भविष्यति, यथा यज्ञादिविनियोगः

कर्मवत्सु गृहस्थेषु, तस्मात् गृहस्थैरनुपादेयाः शमादय इति पूर्वः पक्षः ॥ राद्धान्तस्तु—"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति सामान्येन विद्याङ्गतया विनियोगात् गृहस्थैरप्युपादेयाः । न च कर्मवतां तेषां शमदमाद्युपादानामसामर्थ्यम् । भिन्नविषयत्वाच्छमादीनाम् । विहितेषु हि कर्म्मसु व्यापारः । अविहितेषु प्रयोजनशून्येषु च शमादयः । अतः शमादिविनियोगो यज्ञादिविनियोगवन्न संकोचमर्हति ॥ सूत्रार्थः—यद्यपि गृहस्थो यज्ञादिकर्मसु विनियुक्तः । तथापि शमदमाद्युपेतः स्यात् । कुतः । "शान्तो दान्त" इत्यादिना तद्विधेः । तदङ्गतया विद्यानिष्पत्तये तेषामवश्यानुष्ठेयत्वाच्च । एकाग्रतानिष्पाद्यत्वाच्छमदमादिभिरेव विद्यानिष्पत्तेरित्यर्थः । यज्ञादिकर्माण्यपि पापनिर्हरणद्वारेणैकाग्रतामापादयन्तीत्यभिप्रायः ॥

( सर्वान्नानुमत्यधिकरणम् )

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

वाजिनां छन्दोगानां च प्राणविद्यायां "न ह वा एवंविदि किं चनानन्नं भवति" इति सर्वान्नानुमतिः संकीर्त्यते । किं प्राणविदः सर्वान्नानुमतिः सर्वदा उत प्राणात्ययापत्ताविति संशयः ॥ अविशेषात्सर्वदेति पूर्वपक्षः ॥ अतिशयितशक्तेर्ब्रह्मविदोऽपि शुच्छिष्टपरिग्रहभक्षणयोः प्राणात्ययापत्तावेव दर्शनादल्पशक्तेः प्राणविदः किं पुनरिति प्राणात्ययापत्तावेवेति राद्धान्तः ॥ सूत्रार्थः—च शब्दोऽवधारणे । विदः सर्वान्नानुमतिः प्राणात्यये एव । कुतः । तद्दर्शनात् अतिशयितशक्तेर्ब्रह्मविदः प्राणात्ययापत्तावेव सर्वान्नानुमतिदर्शनात् ॥

अबाधाच्च ॥ २९ ॥

" आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः " इत्याहारशुद्धिविधेरबाधाच्च प्राणात्यय एव ॥

अपि स्मर्यते ॥ ३० ॥

" प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥" इति
प्राणसंशय एव सर्वान्नानुमतिः स्मर्यते च ॥

शब्दश्चातोऽकामकारे ॥ ३१ ॥

यतः सर्वान्नानुमतिः प्राणात्यये श्रुता अतोऽकामकारे प्रतिषेधकशब्दश्चोपपद्यते इत्यर्थः । अस्ति हि काठकानां कामकारे प्रतिषेधकः शब्दः " तस्माद्ब्राह्मणः सुरां न पिबति पाप्मनोत्सृजा " इति । पाप्मना संसृष्टो न भवामीति मत्वा सुरां न पिबतीत्यर्थः ॥

( विहितत्वाधिकरणम् )

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

किं यज्ञादयो विद्याङ्गभूताः केवलाश्रमस्याप्यङ्गभूता उत नेति संशयः ॥ केवलाश्रमस्याप्यङ्गत्वे नित्यानित्यसंयोगरूपविरोधः प्रसज्यते इति नाङ्गभूताः केवलाश्रमस्येति पूर्वपक्षः ॥ राद्धान्तस्तु—यद्येकेनैव विनियोगेनोभयाङ्गत्वमिष्यते तदा नित्यानित्यसंयोगविरोधः । इह तु " यावज्जीवमग्निहोत्रं जुहुयात् । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति विनियोगपृथक्त्वेन विरोधः परिहृयते । यथा ऽग्नि-

होत्रादीनामेव कर्मणाम् । जीवनाधिकारकमनाधिकारयोरेवाधिकारभेदस्यास्फुटत्वात् स्फुटीकरणाय पुनरिह निरूप्यते ॥ सूत्रार्थः—"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिना केवलगृहस्थाश्रमिणो जीवननिमित्ततया विहितत्वादेव यज्ञादिकेवलाश्रमकर्मापि ॥

सहकारित्वेन च ॥ ३३ ॥

"तमेतं वेदानुवचनेन" इत्यादिना विद्यासाधनत्वेन विहितत्वाच्च विद्यासहकारित्वेन चानुष्ठेयं यज्ञादिकर्म्म । विनियोगपृथक्त्वेन विरोधः परिह्रियते इत्यभिप्रायः ॥

सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि उभयत्र विनियोगेऽपि त एव यज्ञादयः । कुतः । उभयलिङ्गात् उभयत्र प्रत्यभिज्ञानाख्यलिङ्गात् ॥

अनभिभवं च दर्शयति ॥ ३५ ॥

"धर्मेण पापमपनुदति" इत्यादिना तैरेव यज्ञादिभिर्विद्याया उत्पत्तिप्रतिबन्धाभावरूपानभिभवं च दर्शयति । अत उभयत्र विनियोगात्केवलाश्रमिणां मुमुक्षूणां चानुष्ठेया यज्ञादयः ॥

( विधुराधिकरणम् )

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विधुरादीनामनाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति नेति संशयः ॥ आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायास्तदभावात्तेषामनधिकार इति पूर्वपक्षः ॥ राद्धान्तस्तु—उर्द्ध्वरेतस्त्वेऽपि रैक्वादिष्वनाश्रमिषु विद्यानिष्पत्तिदर्शनात् आश्रमानियतैर्जपोपवासादिभिरेव तेषां विद्यानुग्रहो भवतीत्यस्त्येवाधिकारः ॥ सूत्रा-

र्थस्तु—तुशब्दः पक्षव्यावृत्त्यर्थः । चशब्दोऽवधारणे । अन्तराऽपि आश्रमान्तरापि वर्तमानानामनाश्रमिणामप्यधिकारोऽस्त्येव । कुतः । तद्दृष्टेः रैक्वादिषु विद्यानिष्ठत्वदृष्टेः ॥

अपि स्मर्यते ॥ ३७ ॥

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते "जप्येन चापि संसिद्ध्येत" इत्यादिना ॥

विशेषानुग्रहश्च ॥ ३८ ॥

आश्रमानियतधर्मविशेषेण विद्यानुग्रहः श्रूयते च "तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विच्छेत्" इति ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतोऽनाश्रमित्वादितरदाश्रमित्वं ज्यायः । धर्मभूयस्त्वात् । लिङ्गाच्च स्मृतेश्चेत्यर्थः । "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति हि स्मर्यते । तस्मादनाश्रमित्वेन विद्यानिष्ठत्वमापद्विषयमित्यभिप्रायः ॥

( तद्भूताधिकरणम )

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
त्तद्रूपाभावेभ्यः ॥ ४० ॥

नैष्ठिकवैखानसपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानामपि विद्याधिकारोऽस्ति नेति संशयः ॥ विधुरादिवज्जपादिभिरपि तदनुष्ठानसम्भवादस्त्यधिकार इति पूर्वपक्षः ॥ राद्धान्तस्तु—नैष्ठिकादीनां स्वाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणात् शिष्टबहि-

प्कृतत्वाच्च तेषामनधिकारः॥ सूत्रार्थः—तद्भूतस्य तु नातद्भावः नैष्ठिकादिभूतस्यातथाभावो न भवति । कुतः । तद्रूपाभावेभ्यः शास्त्रे नियमात् । तद्रूपाभावाः नैष्ठिकादिधर्माभावाः । तेभ्यो नियच्छन्ति हि शास्त्राणि "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति नैष्ठिकस्य तत्रैव नियमः। "अरण्यमीयात्ततो न पुनरेयात्" इति वैखानसस्य। "संन्यस्याग्नीन् पुनरावर्तयेत्" इति च परिव्राजकस्य। अत एतेषामनाश्रमित्वेनावस्थानाभावात् विद्याधिकारो न सम्भवतीति । जैमिनेरप्यविगीतोऽयम् ॥

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

अधिकारिकमधिकारिलक्षणोक्तं "अवकीर्णिपशुश्च तद्वात्" इत्येव प्रायश्चित्तं नैष्ठिकस्य न संभवति। तदयोगात् । तस्य हि पतनं स्मर्यते प्रायश्चित्ताभाववचनेन ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा''इति ।

अत उपकुर्वाणब्रह्मचारिविषयमाधिकारिकम् ॥

उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥

एके प्रायश्चित्तमात्रमपि मन्यन्ते। यत उपपूर्वमुपपातकमिदम् । अशनवत् मध्वशनादिनिषेधतत्प्रायश्चित्तवद्भवेत्तेत्यर्थः । कुतः । उपकुर्वाणब्रह्मचारिण उक्तमाधिकारिकमस्यापि भवति । तदुक्तं स्मृतिकारैः "उत्तरेषां चैतदविरोधि"इति । उपकुर्वाण ब्रह्मचारिणा उक्तो धर्मः उत्तरेषाञ्चाश्रमिणां स्वाश्रमाविरोधी भवत्येवेत्यर्थः ॥

बहिस्तूभयथा स्मृतेराचाराच्च ॥ ४३ ॥

उभयथाऽपि उपपातकित्वे महापातकित्वेऽपि नैष्ठिकाश्रमच्युतो बहिर्भूतः कर्माधिकारात्। "प्रायश्चित्तं न पश्यामि" इति स्मृतेराचाराच्च। वर्जयन्त्येन शिष्टविद्योपदेशादौ। यद्यपि कल्मषापनोदनाय केश्चित्प्रायश्चित्तमुपादिश्यते। तथापि कर्माधिकारापादनी शुद्धिस्तेषां न सम्भवतीत्यभिप्रायः॥

( स्वाम्यधिकरणम् )

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

उद्गीथाद्युपासनं किं यजमानेनानुष्ठेयं उत ऋत्विजेति संशयः॥ "यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इति क्रतुवीर्यवत्तरत्वफलं यजमानस्येति दहरोपासनादिवद्यजमानेनानुष्ठेयमिति पूर्वपक्षः ॥ कर्माङ्गाश्रयत्वादस्योपासनस्य कर्मणां चार्त्विज्यत्वेनैतदपि ऋत्विजानुष्ठेयं गोदोहनादिवदिति राद्धान्तः॥ सूत्रार्थः—स्वामिनो यजमानस्योद्गीथाद्युपासने कर्तृत्वम्। कुतः। तस्यैव फलश्रुतेरित्यात्रेयो मन्यते ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

क्रत्वङ्गत्वेन क्रत्वधिकृतस्यैवास्मिन्नुपासनेऽधिकारात् क्रतोश्चार्त्विज्यत्वेनैतदप्यार्त्विज्यमित्यौडुलोमिराचार्यो मन्यते। यजमानफलसाधनत्वेऽपि क्रतोस्तदनुष्ठानाय हि ऋत्विक् परिक्रियते ॥

( सहकार्यन्तरविध्यधिकरणम् )

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र मौनं विद्याङ्गतया विधीयत उतानूद्यत इति संशयः ॥ मौनस्य मननरूपत्वात् "श्रोतव्यो मन्तव्यः" इति च प्राप्तत्वेनानूद्यत इति पूर्वपक्षः ॥ राद्धान्तस्तु—मुनिशब्दस्य प्रकृष्टमननशीले प्रसिद्धेः प्रकृष्टमननमुपास्यविषयाभ्यासरूपं विद्यानिष्पत्तये विधीयते इति ॥ सूत्रार्थः—तद्वतो विद्यावतः सहकार्यान्तरं मौनं विधीयत इति युक्तम् । विध्यादिवदत्रापि विधीयत इति विधिः यज्ञदानप्रभृत्याश्रमधर्मः । आदिशब्दात् श्रवणमनने गृह्यते । आश्रमधर्मवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयं सहकार्यन्तरं मौनमपूर्वं विधीयते । कुत इत्यत्राह । पक्षेणेति । मुनिशब्दस्य प्रकृष्टमननयुक्ते पक्षेण प्रसिद्धेरित्यर्थः ॥

कृत्स्नभावाद्गृहिणोपसंहारः ॥ ४७ ॥

सर्वाश्रमिणां विद्यावत्त्वेऽपि छान्दोग्ये "स खल्वेवं वर्तयन् यावदायुष ब्रह्मलोकमभिसम्पद्यते" इति गृहस्थधर्मेणोपसंहारः सर्वाश्रमधर्मप्रदर्शनार्थः । कुतः । कृत्स्नभावात् कृत्स्नेष्वाश्रमिषु विद्यायाः सद्भावादित्यर्थः ॥

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

"अथ मुनिः" इत्येतस्मिन्नपि वाक्ये "अथ भिक्षाचर्यं चरति" इति पारिव्राज्यैकान्तधर्मेणोपसंहारः सर्वाश्रमधर्मप्रदर्शनार्थः । भिक्षाचर्यामौनादिवदितरेषां चाश्रमधर्माणां यज्ञादीनामप्युपदेशात् ॥

( अनाविष्काराधिकरणम् )

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र किं बाल्यस्य कर्म कामचारादिकं सर्वं विदुषोपादेयं उत विद्यामाहात्म्यानाविष्कार इति संशयः ॥ "बाल्येन तिष्ठासेत्" इत्यविशेषविधानात्कामचारादिकं सर्वमप्युपादेयमिति पूर्वपक्षः। विदुषो विशेषविधानाद्विद्यामाहात्म्याच्च निषेधश्रुतयो बाधिता भवेयुः॥ राद्धान्तस्तु—पाण्डित्यसमयुक्तस्वमाहात्म्याद्यनाविष्कार एव विधान्वययोग्यतयोपादेयः। इतरस्य कामचारादेः "नाविरतो दुश्चरितात्" इत्यादिशास्त्रैर्विद्योत्पत्तिविरोधित्वावगमात्। अतो यथा बालः स्वाभिजनाद्यनाविष्कुर्वन् वर्तते तथा विद्वान् वर्तेतेत्येतदेव युक्तं ॥ सूत्रमपि व्याख्यातम् ॥

(ऐहिकाधिकरणम्)

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

मोक्षव्यतिरिक्ताभ्युदयफलमुपासनं किं स्वसाधनभूतपुण्यकर्मानन्तरमेवोत्पद्यते उतानन्तरमन्यदा वेत्यनियम इति संशयः ॥ साधननिर्वृत्तौ विलम्बहेत्वभावादनन्तरमेवेति पूर्वपक्षः॥ राद्धान्तस्तु—अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्,प्रस्तुते सति तदुत्तरकालमित्यनियमः । दृश्यते हि प्रबलकर्मान्तरेण फलप्रतिबन्धः । "यदेव विद्यया करोति—तदेव वीर्यवत्तरम्" इत्युद्गीथोपासनस्य क्रतोः कर्मान्तरेण फलप्रतिबन्धः फलमित्यभ्युपगमात् ॥ सूत्रमपि व्याख्यातम् । ऐहिकमभ्युदयफलमित्यर्थः ॥

(मुक्तिफलाधिकरणम्)

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

किं मुक्तिफलान्युपासनानि स्वसाधनभूतातिशयितपुण्यकर्मानन्तरमुत्पद्यन्ते उत पूर्ववदनियम इति संशयः ॥ मुक्तिफलोपासनसाधनभूतकर्मणां सर्वकर्मभ्यो बलवत्तरत्वेन प्रतिबन्धाभावादनन्तरमेवोत्पद्यन्ते इति पूर्वः पक्षः॥ तत्रापि ब्रह्मविदपचारस्य ततोपि बलवत्तरत्वेन प्रतिबन्धसम्भवादनियम एवेति राद्धान्तः ॥ सूत्रार्थः—मुक्तिफलानामप्येवमनियमः। कुतः। तदवस्थावधृतेः । प्रतिबन्धाभावे सति फलकालावधृतेः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥



# वेदान्तदीपे

---

## चतुर्थः ऽध्यायः ।

### ( आवृत्त्यधिकरणम् )

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

" ब्रह्मविदाप्नोति परम् । तमेवं विद्वानमृत इह भवति " इत्यादिवेदान्तविहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थ उतासकृदावृत्तमिति संशयः ॥ "स यो ह वै तत् परं ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मवेदनस्य परमाप्तिसाधनत्वश्रुतेः सकृत्कृतेपि वेदने शास्त्रार्थनिर्वृत्तेः सकृदेवेति पूर्वः पक्षः ॥ राद्धान्तस्तु–" यस्तद्वेद यत्स वेद स मयैतदुक्तः " इत्युपक्रम्य " अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से " इत्येकस्मिन्वाक्ये विद्युपास्योर्व्यतिरेकेण प्रयोगदर्शनात्समानार्थेषु च "ब्रह्मविदाप्नोति परम् । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इत्यादिषु ध्यानवेदनयोर्व्यतिकरदर्शनाच्च ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं स्मृतिसन्तानरूपं वेदनमेव शास्त्रार्थ इति निश्चीयते ॥ सूत्रार्थः–आवृत्तिरसकृत् वेदनशास्त्रार्थावृत्तिरसकृत्। असकृदावृत्तं वेदनं ध्यानशब्दवाच्यमित्यर्थः। कुतः । उपदेशात् वेदनविधायिसमानशास्त्रैर्ध्यातव्य उपासीतेत्युपदेशात् ॥

लिङ्गाच्च ॥ २ ॥

लिङ्गं स्मृतिः। स्मर्यते चायमर्थः। "मां ध्यायन्त उपासते, तेषामहं समुद्धर्ता मृत्युसंसारसागरात्॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते॥

तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा।
तद्ध्यानप्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा॥" इति।

( आत्मत्वोपासनाधिकरणम् )

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥

किं उपास्यं ब्रह्मोपासितुरन्यत्वेनानुसन्धेयमुतात्मत्वेनेति संशयः॥ "अधिकं तु भेदनिर्देशात्। अधिकोपदेशात्" इत्यादिपूपासितुरुपास्यस्यान्यत्वोपपादनाद्यथावस्थितस्यैवोपास्यत्वाच्चान्यत्वेनोपास्यमिति पूर्वः पक्षः॥ राद्धान्तस्तु "त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसि" इति पूर्वे उपासितार उपास्यमात्मत्वेनोपगच्छन्ति। अत आत्मत्वेनोपास्यमिति। तानुपासितॄन् प्रत्यर्थान्तरभूतस्य ब्रह्मण उपासितुरात्मत्वं ग्राहयन्ति शास्त्राणि "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इत्युपासिता परमात्मनः शरीरं परमात्मा च उपासितुरात्मेति प्रतिपादनेन तथा "सर्वं खल्विदं ब्रह्म तज्जलान्" इति "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः—ऐतदात्म्यमिदं सर्वम्" इति च तदायत्तस्वरूपस्थितिमत्त्वं चप्रतिपादनेन च। एवमुपासितुः स्वात्मनोऽप्यात्मत्वाद् ब्रह्मणो यथावस्थितस्वात्मशरीरकब्रह्मानुसन्धानेऽहमित्येवानुसन्धेयम्। यथा मनुष्योऽहमिति स्वशरीरस्य स्वप्रकारैकस्वभावतया प्रकारिणि स्वात्मनि पर्यवसानम् तथा-स्वात्मनोऽपि परमात्मशरीरतया परमात्मप्रकारत्वेन प्रकारिणि

परमात्मन्येव सोऽहंबुद्धिशब्दयोः पर्यवसानमित्यस्यार्थस्य स्वे-म्न ग्रह ब्रह्मेत्येवोपासीतेत्युक्तं भवति ॥ सूत्रमपि व्याख्यातम् ॥

( प्रतीकाधिकरणम् )

न प्रतीके न हि सः ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

" मनो ब्रह्मेत्युपासीत " इत्यादिप्रतीकोपासनेष्वप्या-त्मत्वेनानुसन्धानं कर्तव्यं उत नेति संशयः ॥ " मनो ब्रह्मेत्युपासीत " इति ब्रह्मोपासनत्वाविशेषादात्मत्वेवानुसन्धेय इति पूर्वः पक्षः ॥ राद्धान्तस्तु—न प्रतीके आत्मानुसन्धानं कार्यम् । कुतः । नहि मनआदिरुपासितुरात्मा । न च तत्र ब्रह्मोपास्यम् । ब्रह्मदृष्ट्या मनआदिरुपास्यः । अपकृष्टे उ-त्कृष्टदृष्टिरभ्युदयाय भवतीति । यथा भृत्यादौ राजदृष्टिः ॥ सूत्रद्वयं च व्याख्यातम् ॥

( आदित्यादिमत्यधिकरणम् )

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

" य एवासौ तपति तमुद्गीथमुपासीत " इत्यादिकर्माङ्गा-श्रयोपासनेषु किमुद्गीथावावादित्यादिदृष्टिः कार्या उत आ-दित्यादिषु उद्गीथादिदृष्टिरिति संशयः ॥ कर्मणः फलसाधन-तयोत्कर्षादादित्यादेर्देवतात्वेन तदगुणत्वाच्च आदित्यादौ उ-द्गीथादिदृष्टिः कार्येति पूर्वः पक्षः ॥ राद्धान्तस्तु—कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेत्यादित्यादेरेवोत्कर्षो-पपत्तेरादित्यादिमतय एव आदित्यादिदृष्टय एव कर्माङ्ग उद्गी-थादौ कार्याः ॥ सूत्रमपि व्याख्यातम् ॥

( आसीनाधिकरणम् )

आसीनः सम्भवात् ॥ ७ ॥

किमिदं ब्रह्मोपासनमासीनः कुर्यादुतासीनः शयानस्तिष्ठन्गच्छन्वेत्यनियम इति संशयः ॥ विशेषाश्रवणादनियम इति पूर्वः पक्षः ॥ राद्धान्तस्तु—आसीनस्यैवैकाग्रता सम्भवादेकाग्रतामूलत्वाच्चोपासनस्यासीन एव कुर्यात् ॥ सूत्रमपि व्याख्यातम् ॥

ध्यानाच्च ॥ ८ ॥

" निदिध्यासितव्यः " इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रतावश्यंभाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितं तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

निश्चलत्वं चापेक्ष्य ध्यानवाचो युक्तिः पृथिव्यादिषु दृश्यते "ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः" इत्यादिका । अतो ध्यायतः पृथिव्यादिवदचलत्वमासीनस्यैव संभवतीति ॥

स्मरन्ति च ॥ १० ॥

स्मरन्ति चासीनस्यैव ध्यानं " उपविश्यासने युंज्याद्योगमात्मविशुद्धये " इति ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यस्मिन् देशे यस्मिंश्च काले मनस एकाग्रता तत्र देशे काले चोपासनं कार्यम् शर्करादिरहिते मनोऽनुकूले शुचौ देश इत्येतद्व्यतिरिक्तविशेषाग्रहणात् यथा देशकालयोरेकाग्रतायामवि-

शेषः तथा स्थितिगत्यादौ। आसीनस्य तु विशेषोऽस्तीत्यभिप्रायः॥

( आप्रयाणाधिकरणम् )

## आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

तदिदमपवर्गसाधनमुपासनमेकस्मिन्नहनि कार्यमुत प्रत्यहमाप्रयाणमनुवर्तनीय इति संशयः॥ एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम्, "यावदायुषम्" इति तु वचनं विधिशब्दाभावाद्विद्यायाः फलेनोपसंहारपरमिति पूर्वपक्षः॥ राद्धान्तस्तु—आप्रयाणादनुवर्तनीयम्। कुतः। तत्रापि हि दृष्टं "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति। अप्राप्तत्वेनानुवादत्वासंभवाद्विधिरेवायमिति॥

( तदधिगमाधिकरणम् )

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥१३॥

विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ किं संभवत उत नेति संशयः॥ "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भोगादेव कर्मक्षयश्रवणादश्लेषविनाशश्रुतिः कथंचिद्विद्यास्तुत्यर्थतया नेयेति पूर्वः पक्षः॥ राद्धान्तस्तु—द्वयोः शास्त्रयोर्भिन्नविषयत्वेन विरोधाभावात् संभवत एव। कर्मणां हि फलजननसामर्थ्यं प्रदर्शयति "नाभुक्तं क्षीयते कर्म" इति। "एवमेवंविदि पापं कर्म न श्लिष्यते। एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च श्रुतिर्विद्यायास्तत्सामर्थ्यनिवारणशक्तिं विषयेति। यथाऽग्नेजसोः शीतजननतन्निवारणशक्तिविषये प्रमाणे न विरुध्येते॥ सूत्रमपि व्याख्यातम्॥

( इतराधिकरणम् । )

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

किमसंश्लेषविनाशौ पुण्यकर्मण्यपि समानावुत नेति संशयः ॥ पुण्यकर्मफलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावान्न समानाविति पूर्वपक्षः ॥ राद्धान्तस्तु–मुमुक्षोर्मोक्षविरोधित्वेनानिष्टत्वसाम्यादश्लेषविनाशौ समानावेव ॥ सूत्रार्थः—इतरस्य पुण्यस्याप्यनिष्टफलत्वसाम्यादेवमश्लेषविनाशौ । विद्यानुगुणस्य तु वृष्ट्यन्नारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः ॥

( अनारब्धकार्याधिकरणम् )

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

विद्योत्पत्तेः पूर्वकृतयोः पुण्यपापयोरविशेषेण विनाश उतानारब्धकार्ययोरेवेति संशयः॥ "सर्वे पाप्मानः प्रदूयन्ते" इति विशेषाभावाद् अविशेषेणेति पूर्वपक्षः ॥ राद्धान्तस्तु–" तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये " इत्युत्पन्नविद्यस्यापि शरीरमोक्षावधित्वश्रुतेः सर्वविनाशे शरीरस्थित्यनुपपत्तेश्चानारब्धकार्ययोरेव विनाशः ॥ सूत्रं च व्याख्यातम् ॥

( अग्निहोत्राद्यधिकरणम् )

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेय उत नेति संशयः॥ सुकृतदुष्कृतयोरश्लेषविनाशाभिधानादाश्रमधर्मस्यापि सुकृतसाम्येन कार्याश्लेषादननुष्ठेय इति पूर्वः पक्षः॥ राद्धान्तस्तु–आश्रमधर्मस्य तु विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैवानुष्ठेयः । दृश्यते हि " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन

दानेन" इत्यादिना विद्योत्पत्तिकार्यत्वम् । विद्या चाप्रयाणादह-रहरभ्यासाधेयातिशयोत्पाद्यैव ॥ सूत्रं च व्याख्यातम् ॥

यदि अग्निहोत्रादि साधुकृत्या विद्योत्पत्त्यर्था पूर्वकृता च साधुकृत्याऽननुभूतफला प्रारब्धफला च विद्यानष्टा "सुहृदः साधुकृत्याम्" इत्यस्य को विषय इत्याशङ्क्याह—

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादिसाधुकृत्यायाः पूर्वकृतायाश्चोभयोरन्याऽपि कारीर्यादिसाधुकृत्या दृष्टप्रयोजनार्थितया विदुषाऽनुष्ठिता प्रबलकर्मान्तरप्रतिबद्धफला साधुकृत्याऽस्त्येव । तद्विषयमेकेषां शाखिनां "सुहृदः साधुकृत्याम्" इति वचनम् ॥

अनुष्ठितस्य कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

यदेव विद्ययेति हि ॥ १८ ॥

उक्तं ह्युद्गीथविद्यायाः क्रतोः कर्मान्तरप्रतिबन्धाभावः फलमिति । अतः प्रतिबद्धफला साधुकृत्यास्त्येवानादिकालप्रवृत्ता ॥

( इतरक्षपणाधिकरणम् )

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥

इतरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशयः ॥ "यावन्न विमोक्ष्ये अथ संपत्स्ये" इति संपत्तेः शरीरविमोक्षमात्रविलम्बश्रुतेस्तच्छरीरावसाने इति पूर्वपक्षः ॥ राद्धान्तस्तु-आरब्धफलयोः कर्मणोर्भोगेनैव क्षपयितव्यत्वाभिप्रायेण "यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्युच्यते । शरीरमतन्त्रम् । कर्मविपर्यो

हि बन्धमोक्षौ । अतः आरब्धफले पुण्यपापे यावता शरीरेण समापनीये तावता क्षपयित्वा " अथ संपत्स्ये " इति नियम एव ॥ सूत्रं च व्याख्यातम् ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे चतुर्थस्याध्यायस्य प्रथमः पादः ।

---

( वागधिकरणम् )

वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

" अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते मनः प्राणे " इत्यादिकोत्क्रान्तिविषयाऽऽम्नायते । किं वागिन्द्रियं मनसि संपद्यते उत वाग्वृत्तिमात्रमिति संशयः ॥ वाचो मनःप्रकृतित्वाभावात्स्वरूपलयस्तत्र न सम्भवतीति वाग्वृत्तिमात्राभिप्रायमिति पूर्वपक्षः ॥ राद्धान्तस्तु—अकारणे संपत्त्यभावस्य वाग्वृत्तावपि तुल्यत्वदर्शनात् वाङ्मनसीति वाक्स्वरूपस्यैव संपत्तिशब्दाच्च स्वरूपमेव संपद्यते । अकारणे लयाभावात्संपत्तिशब्दः संयोगाभिप्रायः ॥ सूत्रं च व्याख्यातम् ॥

अत एव सर्वाण्यनु ॥ २ ॥

यतो वाचो मनसि संयोगमात्रमुच्यते न तु लयः अत एव तदानीं "सर्वाणीन्द्रियाणि वाचमनु मनसि संपद्यन्ते" इति वचनमुपपन्नम् " तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः " इति ॥

( मनोऽधिकरणम् )

तन्मनः प्राण उत्तरात् ॥ ३ ॥

" मनः प्राणे " इत्यत्र किं प्राणशब्देनाप उच्यन्ते उत प्राण एवेति संशयः ॥ प्राणस्य मनः प्रकृतित्वाभावात् " अन्नमयं हि सोम्य मनः " इति मनसोऽन्नमयत्वश्रवणात् अपाच्चान्नस्य प्रकृतित्वेन तत्सपत्तिरुपपद्यते इति प्राणशब्देनाप उच्यन्ते इति पूर्वपक्षः । " आपोमयः प्राणः " इत्यम्मयत्वात्प्राणस्य प्राणशब्देनापो वक्तुम् युज्यन्ते ॥ राद्धान्तस्तु– " अन्नमयं हि सोम्य मनः आपोमयः प्राणः " इति मनःप्राणयोर्न तत्तत्प्रकृतित्वमुच्यते । अपि तु तदाप्यायनम् । आहङ्कारिकत्वान्मनसः प्राणस्य चाकाशप्रकृतित्वात् । अतो " वाङ्मनसि " इतिवदुत्तरात् " मनः प्राणे " इति शब्दाच्चत्तरेन्द्रिययुक्तं मनः प्राणे संयुज्यते ॥

( अध्यक्षाधिकरणम् )

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स प्राणः किं तेजसि संयुज्यते उत जीव इति संशयः ॥ "प्राणस्तेजसि" इति वचनात् तेजस्येवेति पूर्वपक्षः ॥ राद्धान्तस्तु– उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः प्राणः करणाध्यक्षे जीवे संयुज्यते । एतदविरोधाय जीवे संयुज्य पश्चात्तेजःसंयोगं " प्राणस्तेजसि " इति वदति । श्रूयन्ते हि प्राणस्य जीवोपगमादयः " एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । कस्मिन्नु वा प्रतिष्ठिते प्रतिष्ठास्यामि " इत्यादिषु ॥

( भूताधिकरणम् )

भूतेषु तच्छ्रुतेः ॥ ५ ॥

नैकस्मिन्दर्शयतो हि ॥ ६ ॥

" प्राणस्तेजसि " इति किं तेजोमात्रे प्राणः संयुज्यते उत भूतान्तरसंसृष्टे इति संशयः ॥ " तेजसि " इति वचनात्तेजोमात्र इति पूर्वपक्षः ॥ "पृथिवीमयः" इत्यादिना सत्त्वतो जीवस्य सर्वभूतमयत्वश्रुतेः त्रिवृत्करणश्रुतिस्मृतिभ्यां च तेजस एकस्य कार्याक्षमत्वात् भूतान्तरसंसृष्टे इति राद्धान्तः ॥ सूत्रद्वयं च व्याख्यातम् ॥

( आसृत्युपक्रमाधिकरणम् )

## समाना चा सृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना उताविदुष एवेति संशयः ॥ विदुषोऽत्रैवामृतत्वप्राप्तिश्रुतेरविदुष एवेति पूर्वपक्षः । श्रूयते हि विदुषोऽत्रैव ब्रह्मप्राप्तिः " यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते " इति ॥ राद्धान्तस्तु—विदुषोऽर्चिरादिकयैव ब्रह्मप्राप्तिः । अर्चिरादिगत्युपक्रमात्प्रागियमुत्क्रान्तिर्विद्वदविदुषोः समाना । गतिश्च मूर्द्धन्यनाड्या " शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्द्ध्वमायन्नमृतत्वमेति " इति श्रुतेः । " यदा सर्वे प्रमुच्यन्ते " इत्यनेन गतिश्रुत्यविरोधायामृततरसाधनभूतोपासनानिष्पत्तिरुच्यते । हृदि स्थिताः कामाः यदा प्रमुच्यन्ते तदैवोपासनारम्भान्मर्त्योऽमृतो भवति । अत्र कामविमोकपूर्वोपासनेऽस्मिन्नेव मर्त्योऽर्चिरादिकया गत्या ब्रह्म समश्नुते इत्यर्थः ॥ सूत्रार्थः—सृतिः गतिः आ गत्युपक्रमात् उत्क्रान्तिर्विदुषोऽपि समाना । विदुषोऽर्चिरादिगतिश्रुतेः । " अथ मर्त्योऽमृतो भवति " इत्युच्यमानममृतत्वं अनुपोष्य च अदग्ध्वैव शरीरेन्द्रियादिसम्बन्धम् । उपासनारम्भपरिकररूपमित्यर्थः ॥

तदापीतेः(१) संसारव्यपदेशात् ॥ ८ ॥

तदमृतत्वमुक्तप्रकारमेव । कुतः । आपीतेः संसारव्यपदेशात् । अपीतिः ब्रह्मप्राप्तिः । अर्चिरादिकया गत्या देशविशेषं गत्वा यावद् ब्रह्म प्राप्यते तावत्संसारः शरीरसम्बन्धो हि व्यपदिश्यते ॥ गतिव्यपदेशादेव शरीरादुत्क्रान्तस्य कथं शरीरसम्बन्ध इत्याह—

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

सूक्ष्मशरीरमनुवर्तते । गतिव्यपदेशात् । न केवलं गतिव्यपदेशादेव । प्रमाणान्तरतस्तथा सूक्ष्मशरीरवत्त्वोपलब्धिश्च । विदुषोऽर्चिरादिकया गत्वा गच्छतश्चन्द्रमसा संवादो हि व्यपदिश्यते "तं प्रतिब्रूयात्सत्यं ब्रूयात्" इत्यादिना ॥

नोपमर्देनातः ॥ १० ॥

अत उक्ताद्धेतुकलापात् "अथ मर्त्योऽमृतो भवति" इति वचनं न देहसम्बन्धोपमर्देनामृतत्वं वदति । अपि तु उक्तमेवोपासनारम्भं वदतीत्यर्थः ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न देहसम्बन्धोपमर्देन । उपलभ्यते ह्युत्क्रामतो विदुषः क्वचिदूष्मा सूक्ष्मदेहगुणः । न च स्थूलदेहगुणः । अन्यत्रानुपलब्धेः । अतो विद्वान्सूक्ष्मशरीरेणोत्क्रामति ॥

प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

"स एतास्तेजोमात्राः" इत्यारभ्य "इति तु कामयमानः"

---

१ तत् आ अपीतेः इतिच्छेदः ।

इत्यनेनाविदुष उत्क्रान्तिप्रकारं लोकान्तरगमनं पुनरावृत्तिं चाभिधाय "अथाकामयमानः" इत्यादिना "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिप्रतिषेधात् उक्तप्रकारो नोपपद्यत इति चेन्न। शारीरात्प्राणानामविश्लेषोऽनेनोच्यते। तस्याकामयमानस्य विदुषः शारीरस्य प्राणाः स्वस्मान्नोत्क्रामन्ति। देवयानेन गमनात्स्वदेहेव तिष्ठन्ति। अयमर्थः स्पष्टो ह्येकेषाम् माध्यन्दिनशाखिनां पाठे "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति" इति ॥

## स्मर्यते च ॥ १३ ॥

स्मर्यते च विदुषो मूर्द्धन्यनाड्योत्क्रान्तिः—
"ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥" इति ॥

(परसंपत्त्यधिकरणम्)

## तानि परे तथा ह्याह ॥ १४ ॥

"प्राणस्तेजसि" इति तेजः शब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि किं परस्यां देवतायां संपद्यन्त उत यथाकर्म यथाविद्यं गच्छन्तीति संशयः ॥ तदानीं सुखदुःखभोगाद्यभावेन संपत्तिप्रयोजनाभावात् यथाकर्म यथाविद्यमिति पूर्वपक्षः । सर्वस्य परदेवताकार्यत्वेन तदात्मकत्वात् गन्तव्यस्थानमिदं "परस्यां देवतायाम्" इत्युच्यते ॥ राद्धान्तस्तु—तानि परस्मिन् ब्रह्मणि संपद्यन्ते । "तेजः परस्यां देवतायाम्" इति ह्याह। यथाश्रुतिविश्रमस्थानत्वेन कार्यं परिकल्प्यमित्यर्थः ॥ सूत्रं च व्याख्यातम् ॥

( अविभागाधिकरणम् )

अविभागो वचनात् ॥ १५ ॥

सेयं परमात्मनि संपत्तिः किं प्राकृतप्रलयवत् कारणापत्तिरूपा उत मनःप्रभृतिसंपत्तिवत् अविश्लेषमात्रमिति संशयः ॥ परमात्मनः कारणतया तत्संपत्तिवचनाच्च कारणापत्तिरेवेति पूर्वः पक्षः ॥ राद्धान्तस्तु—"वाङ्मनसि संपद्यते" इति श्रुतस्यैव संपत्तिपदस्य सर्वत्रानुषङ्गात् अनेकत्रानुषक्तस्याभिधानवैरूप्ये प्रमाणाभावादत्राप्यविभागः अविश्लेष एवोच्यते ॥ सूत्रं च व्याख्यातम् ।

( तदोकोऽधिकरणम् )

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति शताधिकया मूर्द्धन्यनाड्या विदुषो गमनमिति नियमः सम्भवति नेति संशयः ॥ नाडीनामतिसूक्ष्मत्वेन दुर्वचत्वान्नियमो न सम्भवति, इति यादृच्छिकी तथागतिमनुवदतीदं वचनमिति पूर्वपक्षः ॥ राद्धान्तस्तु—परमपुरुषाराधनभूतया विद्यया तदङ्गभूतगतिचिन्तनेन च प्रीतेन परमपुरुषेणानुगृहीतो जीवः तत्प्रकाशितद्वारस्तयैव मूर्द्धन्यानाड्या गच्छति ॥ सूत्रार्थः—हार्दपरमपुरुषाराधनविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च प्रीतहार्दानुगृहीतो भवति ततस्तदोको जीवस्य स्थानं हृदयमग्र-

ज्वलनं प्रकाशिताग्रं भवति। एवं परमपुरुषप्रकाशितद्वारः शताधिकया गच्छति। "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। सर्वस्य चाहं हृदि सन्निविष्टः" इति हार्दः परमात्मा॥

(रश्म्यनुसाराधिकरणम्)

रश्म्यनुसारी ॥ १७ ॥

"अथ यत्रैतस्माच्छरीरादुत्क्रामतीत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति विद्वान् रश्म्यनुसारी गच्छतीति नियमः सम्भवति नेति संशयः॥ निशि मृतस्य विदुषः आदित्यरश्म्यनुसारासम्भवादनियम इति पूर्वपक्षः। वचनं तु पक्षप्राप्तमनुवदति॥ राद्धान्तस्तु–पक्षप्राप्त्यनुवादे "अथैतैरेव" इत्यवधारणविरोधः। न च निशि रश्मयो न सम्भवन्तीति। सत्येव। निरयांप निदाघसमये ऊष्मोपलब्धेः सूक्ष्माः सन्त्येवेति रश्म्यनुसार्येव गच्छति। हेमंतेऽनुपलब्धिर्दुर्दिनवद्धिमाभिभवात्॥

(निशाधिकरणम्)

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥

विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति नेति संशयः॥
"दिवा च शुक्लपक्षश्च उत्तरायणमेव च।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्"॥

इति निशामरणस्य गर्हितत्वेनाधोगतिहेतुत्वान्न ब्रह्मप्राप्तिः सम्भवतीति पूर्वपक्षः॥ राद्धान्तस्तु—विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशश्रुतेः प्रारब्धस्यापि कर्मणश्चरमदेहावधित्वाद्बन्धहेत्वभावान्निशि मृतस्यापि ब्रह्मप्रा-

प्तिरस्त्येवेति । अनेिद्विपया निशामरणनिन्दा ॥ सूत्रार्थः–निशि मृतस्य न ब्रह्मप्राप्तिरिति चेन्न । सम्बन्धस्य यावद्देहभावित्वात् । अनारब्धकार्यकर्मसम्बन्धस्य विद्यया विनष्टत्वात् । आरब्धकार्यकर्मसम्बन्धस्यापि यावच्चरमदेहभावित्वात्तस्मन्नन्धहेत्वभावेन ब्रह्मप्राप्तिरस्त्येवेत्यर्थः । तदेतत् श्रुतिरेव दर्शयति "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति ॥

(दक्षिणायनाधिकरणम्)

## अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति नेति संशयः ॥ "अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानङ्गत्वा चन्द्रमसः सायुज्यं गच्छति" इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात् चन्द्रं प्राप्तानां "अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति वचनाच्च दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न संभवतीति पूर्वः पक्षः ॥ राद्धान्तस्तु—पूर्वोक्ताद्बन्धहेत्वभावाद्विदुषश्चन्द्र प्राप्तस्यापि पुनरावृत्तिर्न संभवति । चन्द्रसायुज्यवचनं विदुषो ब्रह्मप्रेप्सोर्विश्रामस्थानमात्रविषयम् । आवृत्तिवचनं त्वविदुषामेव ॥ सूत्रार्थः–यतो हेतोर्निशि मृतस्य ब्रह्मप्राप्तिः । तत एव बन्धहेत्वभावाद्दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव ॥

"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इति मरणकालविपर्यं स्मर्यते इति चेत्तत्राह—

## योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ २० ॥

योगिनो ब्रह्मनिनिष्ठान् प्रत्येते देवयानपितृयानगती स्मार्ते स्मृतिविषयभूते अहरहः स्मर्तव्ये स्मर्येते इत्यर्थः । "यत्र

काले त्वानावृत्तिमावृत्तिं चैव योगिनः ” इत्यादिना

“ नैते सृतीपार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ” ॥

इत्यन्तेन मुमूर्षूंन्प्रति कालविशेषोपादानं स्मर्यते । आतिवाहिकगणस्य कालभिमानिदेवताभूयस्त्वेन यत्र काल इत्युच्यते ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे चतुर्थाध्यायस्य द्वितीयः पादः ।

---

( अर्चिराद्यधिकरणम् )

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

किं विद्वानर्चिरादिना एकेन मार्गेण गच्छति उत तेन चान्यैर्वेति संशयः ॥ तदर्थं परीक्ष्यते सर्वासु श्रुतिषु आर्चिरादिरेक एव मार्ग आम्नायते उत तत्र तत्रान्य इति । यदि आर्चिरादिरेक एव सर्वत्र तदेकेनैव गच्छति । यदि तत्र तत्रान्यः तदा तैर्वाऽन्येन वा ॥ छान्दोग्यवाजसनेयकादिषु नानाविधा गतिप्रकाराः श्रूयन्ते । तेषां ब्रह्मप्राप्तौ नैरपेक्ष्यश्रवणात्तैर्वाऽर्चिरादिना वेति विकल्प इति पूर्वः पक्षः ॥ राद्धान्तस्तु—सर्वत्रार्चिराद्यन्तर्भूतादित्यादीनां दर्शनात् स एवेति प्रत्यभिज्ञानात् अन्यत्रोक्तानामन्यत्रोपसंहाराच्च सर्वत्रार्चिरादिरेक एव मार्ग इति तेनैव गच्छति विद्वान् ॥ सूत्रार्थः—अर्चिरादिनैव गच्छति । कुतः । तत्प्रथितेः । प्रथितिः प्रसिद्धिः । सर्वत्र तत्प्रत्यभिज्ञानादित्यर्थः ॥

( वाय्वधिकरणम् )

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

"तेऽर्चिषमभिसम्भवंत्यर्चिषोऽहरह्नः" इत्यारभ्य "मासेभ्यः संवत्सरं संवत्सरादादित्यं" इति छान्दोग्ये श्रुतम्। तत्र संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुतौ श्रुत्यन्तरे। द्वयोः प्रकरणयोः किं देवलोको वायुश्चार्थान्तरभूतावुत वायुरेक एवेति संशयः॥ शब्दभेदादर्थान्तरभूताविति पूर्वपक्षः। अर्थान्तरत्वे सति "देवलोकादादित्यम्" इति देवलोकस्य च "तेन स ऊर्ध्वमाक्रमते स आदित्यम्" इति वायोश्च आदित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वाद्देवलोको वायुश्च यथेष्टक्रमेण निवेशयितव्यौ॥ राद्धान्तस्तु—वायुरेव देवलोकशब्दनिर्दिष्ट इति न तस्मादन्यः। देवानां लोक इति हि देवलोकः। देवानां वासस्थानं देवलोकशब्देनाविशेषेण निर्दिष्टम्। "योऽयं पवत एष एव देवानां गृहाः" इति वायोर्देवानां वासस्थानत्वेन श्रुतत्वादविशेषनिर्दिष्टो देवलोको वायुरेवेति निश्चीयते इति संवत्सरादूर्ध्वं वायुर्वायोरादित्य इति क्रमश्च स्यात्॥ सूत्रार्थः—अब्दात्संवत्सरादूर्ध्वमादित्यात् पूर्वं वायुमेव निवेशयेत्। देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायोरेकस्यैव निर्दिष्टत्वात्। देवानां वासस्थानमित्यविशेषेण हि देवलोकशब्दो वायुं देवानां वासस्थानमभिदधाति, वायुशब्दस्तमेव विशेषेणेति द्वयोः प्रकरणद्वयविहितयोरेकत्वादित्युक्तं भवति॥

( वरुणाधिकरणम् )

## तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

छान्दोग्यवाजसनेयककौषीतकिप्रभृतिष्वाम्नातस्यार्चिरादिमार्गस्यार्चिरहरापूर्यमाणपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रविद्युद्वरुणेन्द्रप्रजापतिरूपस्योपसंहारे वायुपर्यन्तस्य श्रुता-

विभिः क्रमप्रकार उक्तः । वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः उत वायोरुपरीति संशयः ॥ "स वायुलोकं स वरुणलोकम्" इति कौषीतकीपाठक्रमेण वायोरुपरि वरुणस्य निवेशः । इन्द्रादेरपि वरुणनिवेशाय वाय्वादित्ययोः क्रमस्य बाधितत्वात्तत्रैव वरुणोपरीति पूर्वपक्षः ॥ राद्धान्तस्तु—विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोर्लोके वेदे च सम्बन्धावगमात् पाठक्रमादर्थक्रमस्य बलीयस्त्वेन वरुणस्य विद्युत उपरि निवेशः कार्यः । इन्द्रादेरपि वरुणनिवेशाय विद्युतो व्यवधानतद्दर्शनाद्वरुणोपरिनिवेशः ॥ सूत्रं च व्याख्यातम् ॥

( आतिवाहिकाधिकरणम् )

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

किमर्चिरादयो विदुषो ब्रह्मप्रेप्सोर्मार्गचिन्हभूता उत गमयितार इति संशयः ॥ अमुकवृक्षं गत्वा ततः पर्वतमित्यातिदेशिकोपदेशप्रकारदर्शनान्मार्गचिन्हभूता इति पूर्वपक्षः ॥ राद्धान्तस्तु—"स एनान् ब्रह्म गमयति" इति वैद्युतपुरुषस्य गमयितृत्वदर्शनादितरेषां चाविशेषनिर्दिष्टानां स एव सम्बन्ध इति निश्चीयते । "अग्निलोकम्" इत्यादिलोकशब्दोऽपि मध्ये भोगाभावात् गमयितृत्व एवोपपद्यते ॥ सूत्रार्थः—आतिवाहिकाः विदुषामतिवाहे परमपुरुषेण नियुक्ताः अर्चिराद्यभिमानिदेवताविशेषाः गमयितार इत्यर्थः । "स एनान् ब्रह्मगमयति" इति लिङ्गात् ॥

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

ततो विद्युतउपरिष्टात् वैद्युतेन विदुषो गमनम् । तच्छ्रुतेः "स एनान् ब्रह्मगमयति" इति तस्यैव श्रुतेः । वरुणादीनां तदनुग्रा-

हकत्वेन गमयितृत्वमिति निश्चीयते इत्यर्थः ॥

( कार्याधिकरणम् )

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति उत परं ब्रह्मोपासीनान् अथप्रत्यगात्मानं ब्रह्मात्मकतयोपासी नानितिसंशयः ॥ हिरण्यगर्भमुपासीनानिति पूर्वपक्षः । तेषामेव गत्युपपत्तेः । न हि परिपूर्णं सर्वगतं परं ब्रह्मोपासीनानां तत्प्राप्तये गतिरुपपद्यते नित्यप्राप्तत्वात् । अविद्यानिवृत्तिरेव हि तेषां कार्या ॥ परमेवोपासीनानित्यपरपक्षः । "स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् अविद्यानिवृत्तेः फलाभिसन्धिरहितयज्ञाद्यपेक्षावत् श्रवणाद्यपेक्षावच्च गतिश्रुत्यादेशविशेषापेक्षा च विद्यत इति निश्चीयते ॥ राद्धान्तस्तु-परमुपासीनानान्यनपि नयति। "तद्य इत्थंविदुर्ये चेमेऽरण्ये श्रद्धान्तप इत्युपासते तेऽर्चिषमभिसम्भवंति" इति पञ्चाग्निविदां परं ब्रह्मोपासीनानां चाभेदेनार्चिरादिगतिश्रुतेः। पञ्चाग्निविदो हि प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपविदस्ते च ब्रह्मैव प्राप्य न निवर्तन्ते। परं ब्रह्मोपासीनास्तु यथावस्थितं परं ब्रह्म प्राप्य न पुनर्निवर्तन्ते। "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवंति" इति उभयविधानाद्भेदेनोपादायार्चिरादिगतिश्रुतेरपुनरावृत्तिश्रुतेश्चैवमिति निश्चीयते ॥ सूत्रार्थः—कार्यं हिरण्यगर्भमुपासीनमातिवाहिको गणो नयतीति बादरिराचार्यो मन्यते। अस्यैव गत्युपपत्तेः । परमुपासीनस्य हि न तत्प्राप्तये गतिरुपपद्यते । सर्वगतत्वात्परस्य ब्रह्मणः ॥

## विशेषितत्वात् ॥ ७ ॥

"पुरुषोऽमानव एत्य ब्रह्मलोकान्गमयति" इति "प्रजापतेः सभां वेश्म मपद्ये" इति च माप्यस्थानस्य विशेषितत्वाच्च हिरण्यगर्भमुपासीनमेव नयति ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

एवं निश्चिते सति "स एनान् ब्रह्म गमयति" इति हिरण्यगर्भस्य ब्रह्मव्यपदेशो ब्रह्मसामीप्यात्। "यो ब्रह्माणं विदधाति पूर्वम्" इति हि सामीप्यं विद्यते ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥९॥

हिरण्यगर्भमाप्तावपि अपुनरावृत्तिरुपपद्यते। कार्यस्य हिरण्यगर्भलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाधिकारिपुरुषेण विदुषा सह परमाप्त्यभिधानात् "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति ॥

स्मृतेश्च ॥ १० ॥

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥
इति स्मृतेश्चावगम्यते ॥

परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्मोपासीनमेव नयत्यातिवाहिकगण इति जैमिनिराचार्यो मन्यते। "ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्। "ब्रह्मलोकान्" इति शब्दश्च ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयपरिग्रहस्यैव न्याय्यत्वादुपपद्यते। एवं निश्चिते बहुवचनं च "अदितिः पाशान्" इतिवदुपपन्नम् ॥

## दर्शनाच्च ॥ १२ ॥

"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यर्चिरादिना गतस्य परब्रह्मप्राप्तिं च दर्शयति ॥

## न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥

" प्रजापतेः सभां वेश्म प्रपद्ये " इत्यभिसन्धिश्च न कार्ये । " धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि " इत्यकृतं ब्रह्मलोकमिति तत्रैव विशेषितत्वात् । "यशोऽहं भवामि ब्राह्मणानाम्" इति सर्वात्मभावाभिसन्धानाच्च ॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

कार्यमुपासीनानेवेति न पक्षः । परमेवोपासीनानिति चायमपि नियमो न सम्भवति । कुतः । उभयथा च दोषात् । कार्यमुपासीनानिति पक्षे " अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिकाः श्रुतयो "ये चेमेऽरण्ये श्रद्धां तप इत्युपासते इति च प्रकुप्येयुः परमेवेति नियमे "तद्य इत्थंविदुः" इति प्रकुप्येत् । तस्मादप्रतीकालंबनान्नयतीति भगवान् बादरायणो मन्यते । प्रतीकालंबनास्त्वचिन्मिश्रं केवलं वाचिद्वस्तु । सिंहो देवदत्त इतिवत् ब्रह्मदृष्ट्या स्वरूपेण वा तद्वस्तु य उपासते प्रतीकालम्बनास्तव्द्यतिरिक्ताः सर्वकारणं सत्यसङ्कल्पं निखिलहेयप्रत्यनीकानवधिकातिशयानन्दस्वरूपं ब्रह्म उपासते ये च प्रत्यगात्मनं भूतसूक्ष्मैः संपरिष्वक्तं सर्वत्र वर्त्तमानं भूतसूक्ष्मव्यतिरिक्तंज्ञानैकस्वरूपं नित्यं निर्विकारं

"य आत्मनि तिष्ठन्" इत्यादिनाऽवगतब्रह्मात्मभावं पञ्चाग्निविद्योदितमुपासते तान् उभयविधान्नयति । "तद्य इत्थं विदुर्ये चेमेऽरण्ये" इत्युभयश्रुतेः । तत्क्रतुश्च "यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्युभयेषामेवापुनरावृत्तिः सम्भवति । अचिन्मिश्र केवलमचिद्वस्तु चोपसीनानां तत्क्रतुन्यायेनैव पुनरावृत्तिरवर्जनीया ॥

विशेषं च दर्शयति ॥ १५ ॥

प्रतीकाद्युक्तलक्षणमचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां सर्वेषां गमनपेक्षं परमितफलविशेषं च दर्शयति श्रुतिः "यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति" इत्यादिका । अतः "ब्रह्मणा सह ते सर्वे" इति वचनं नार्चिरादिना गतानां गतिप्रकारविषयम् । अर्चिरादिना गतानां देहावसानसमय एव सुकृतदुष्कृतयोर्नाशाद्धिरण्यगर्भलोकप्राप्तिद्वारतत्रस्थभोगानुभवहेत्वभावात्तत्क्रतुन्यायविरोधात्तदानीमेव ब्रह्मप्राप्तिश्रुतिविरोधाच्च । तद्वचनं तु पुण्यकर्मविशेषेण हिरण्यगर्भलोकं प्राप्तानां "तदुपर्यपि बादरायणः" इति न्यायेन तत्रैव निष्पन्नविद्यानां गतिप्रकारविषयम् । "ते ब्रह्मलोके" इति तु ब्रह्मलोकशब्दस्य कर्मधारयवृत्त्या ब्रह्मविषयत्वात् ब्रह्मण्युपास्ये वर्तमानाः परान्तकाले चरमदेहावसानसमये परामृतात् परस्माद्ब्रह्मणः उपासनप्रीताद्धेतोः परिमुच्यन्ति सर्वेऽस्माद्धन्धाद्विमुच्यन्त इति "वेदान्तविज्ञानसुनिश्चितार्थाः" इति प्रकरणादवगम्यते "तद्य इत्थं विदुः" इति पञ्चाग्निविदो ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात्तत्क्रतुन्यायेनाचिद्वियुक्तब्रह्मात्मकात्मस्वरूपोपासनं विवक्षितमिति निश्चीयते । तथैव तत्र श्रुतिरपि

"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति "रमणीयचरणाः" इति च कर्महेतुकमनुष्यादिभावो ऽपामेव भूतान्तरससृष्टानामिति चिदचिद्विवेकं प्रतिपाद्य "तद्य इत्थं विदुः" इति भूतसूक्ष्मव्यतिरिक्तात्मस्वरूपोपासनमेव विदधाति ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
चतुर्थाध्यायस्य तृतीय पादः ।

( संपद्याविर्भावाधिकरणम् )

## संपद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति किं परं ज्योतिरुपसंपन्नस्य प्रत्यगात्मनः स्वरूपाविर्भावः प्रतिपाद्यते उत अन्येन साध्येन रूपेण सम्बन्ध इति संशयः ॥ स्वस्वरूपस्य सुषुप्त्यादौ निरानन्दत्वदर्शनात्स्वरूपमात्रस्य नित्याविर्भूतत्वाच्च साध्येन सुखैकतानेन रूपेण सम्बध्यते, एवं चाभिनिष्पद्यते इति सङ्गच्छते, परं ज्योतिरुपसंपन्नस्य ह्यानन्दित्वं श्रूयते "रसो वै सः,रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। स एको ब्राह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इत्यादिषु, अतः साध्येन रूपेणेति पूर्वः पक्षः॥राद्धान्तस्तु—"स्वेन रूपेणाभिनिष्पद्यते" इति विशेषणात्स्वरूपाविर्भाव एव । स्वरूपस्य चापहतपाप्मत्वादिगुणकतया प्रजापतिवाक्योदितस्य कर्मकृतदेहसम्बन्धतिरोहितस्य परं ज्योतिरुपसंपत्त्या सूक्ष्मासूक्ष्मदेहविनिर्मुक्तस्यासंकुचितज्ञानादिगुणकस्वरूपाविर्भावात्स्वयाथात्म्यानुभवपूर्वकानवधिकातिशयानन्दब्रह्मानुभवः सम्पत्स्यत इति चोपपन्नतरम् ॥ सूत्रार्थः—परं ज्योतिरुपसंपद्य स्वस्व-

रूपाविर्भावः प्रतिपाद्यते । कुतः । स्वेनशब्दात् साध्यस्यापि रूपस्य स्वासाधारणत्वेन स्वेनेति विशेषणं ह्यनर्थकम् ॥

स्वरूपमात्रस्याहं जानामीति नित्याविर्भूतत्वेन " परं ज्योतिरुपसंपद्य " इत्यनर्थकमित्याशङ्क्याह—

मुक्तः प्रतिज्ञानात् ॥ २ ॥

कर्मसम्बन्धतत्कृतदेहादिविमुक्तस्वरूपमेव " स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते । कथमिदमवगम्यते "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति कर्महेतुकदेहसम्बन्धतत्कृतजागरिताद्यवस्थाविनिर्मुक्तस्वरूपस्यापि वक्तव्यतया प्रतिज्ञानात् ॥

एवमपि स्वरूपमात्राविर्भावस्य पुरुषार्थत्वं न सिध्यतीत्याशङ्क्याह—

आत्मा प्रकरणात् ॥ ३ ॥

देहादिविनिर्मुक्तः स्वरूपेणावस्थित आत्मा अपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्तगुणकः । तस्य ह्याविर्भाव उच्यते । कुतः । प्रकरणात् " य आत्माऽपहतपाप्मा " इति प्रकृतस्य " एतं त्वेव ते भूयोऽनुव्याख्यास्यामि " इत्यादिनोच्यते । अतोऽपहतपाप्मत्वादिगुणकस्य कर्माख्याविद्यातिरोहितस्य परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य आविर्भावः प्रतिपाद्यते ॥

( अविभागेन दृष्टत्वाधिकरणम् )

अविभागेन दृष्टत्वात् ॥ ४ ॥

किमयं मुक्त आविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति उत स्वात्मनोऽप्यात्मतयाऽविभागेनाहं ब्रह्मास्मीति संशयः ॥ "निरञ्जनः परमं साम्यमुपैति । सोऽहं

सर्वान् कामान् सह ब्रह्मणा विपश्चिता । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः” इति श्रुतिस्मृतिभ्यो विभक्तं मुक्तात्माऽनुभवतीति पूर्वपक्षः ॥ राद्धान्तस्तु—“सर्वं खल्विदं ब्रह्म । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि”इत्यादिसामानाधिकरण्येन “यः पृथिव्यां तिष्ठन्—यस्य पृथिवी शरीरम् । य आत्मनि तिष्ठन् यस्यात्मा शरीरम्” इत्यादिषु सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरतया ब्रह्मप्रकारतया तत्तद्बुद्धिशब्दास्तत्पर्यन्तविषया इत्यवगम्य “आत्मेति तूपगच्छन्ति” इति न्यायेन स्वात्मनोऽप्यात्मतया अहं ब्रह्मास्मीत्युपासनेन यथावस्थितपरमात्मात्मकस्वात्मनो दृष्टत्वान्मुक्तः स्वात्मनोऽपि आत्मभूतं ब्रह्माहं ब्रह्मास्मीति अविभागेनैवानुभवति ॥ सूत्रार्थः—अहं ब्रह्माऽऽस्मीति अविभागेन ब्रह्मानुभवति मुक्तः । स्वात्मनोऽप्यात्मतया उपासने यथावस्थितपरमात्मात्मकस्वरूपस्य दृष्टत्वात् । साधर्म्यश्रुतिस्तु परमात्मशरीरभूतस्य प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणैस्तत्साधर्म्यं प्रतिपादयति । “सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता” इति ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात्स्वात्मभूतेन ब्रह्मणा सह तद्गुणाननुभवतीति वदति । काम्यन्ते इति कामाः । कल्याणगुणाः । सर्वकल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः ॥

( ब्राह्माधिकरणम् )

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

किं जीवस्य स्वाभाविकं रूपमपहतपाप्मत्वादिगुणकम् उत चैतन्यमात्रम् उत उभयमिति संशयः ॥ अपहतपाप्मत्वादिगुणकमिति प्रथमः पक्षः ॥ “य आत्माऽपहतपाप्मा” इति प्रतिपादनात् चैतन्यमात्रमिति द्वितीयः पक्षः । “एवं वा अरेऽयमात्माऽनंतरो बाह्यः कृत्स्नः प्रज्ञानघन एव । विज्ञानघन एव” इत्यवधारणात् ॥

राद्धान्तस्तु—विज्ञानस्वरूपस्यैवापहतपाप्मत्वादिगुणकत्वप्रतिपादनादविरोधाद्योभयस्वरूपम् । न च "विज्ञानघन एव" इत्यवधारणं गुणान्तरासहम् । यथा सैन्धवघनस्य रसघन एवेत्यवधारणेऽपि रसाश्रयद्रव्यं रूपस्पर्शादिगुणान्तरं च सहते रसघन एवेत्यवधारणं तु रसवद्रूपान्तरस्वभावव्यावृत्तिपरं द्रव्यान्तराणां हि स्वरूपैकदेशे रसवत्त्वं सैन्धवघनस्य तु सर्वत्र, एवमत्रापि जडवस्तुव्यावृत्त्या संवित्स्वभावस्य सगुणस्यात्मनः स्वप्रकाशतावधारणं क्रियते "विज्ञानघन एव" इति ॥ सूत्रार्थः—ब्राह्मेणापहतपाप्मत्वादिनाऽस्य स्वरूपाविर्भावः । अपहतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाः श्रुताः । उपन्यासादिभ्यः । तेषां ब्रह्मगुणानां प्रत्यगात्मन्यप्यपि "य आत्माऽपहतपा" इत्युपन्यासात् । आदिशब्दात् "जक्षत् क्रीडन् रममाणः" इत्यादिभ्योऽपि सत्यसङ्कल्पादयोऽवगम्यंत इति जैमिनिराचार्यो मन्यते ॥

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

चैतन्यमात्रेण स्वरूपाविर्भावः । "विज्ञानघन एव" इति तदात्मकत्वावधारणादित्यौडुलोमिराचार्यो मन्यते ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवं विज्ञानस्वरूपस्यैव सर्वेषामपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तानामपि "य आत्माऽपहतपाप्मा" इत्युपन्यासात् सद्भावावगमादुभयोरविरोधं भगवान्बादरायणो मन्यते । उभयश्रुत्यवगतस्येतरेतरविरोधाभावादन्यतरबाधे प्रमाणमस्तीत्यभिप्रायः ॥

( संकल्पाधिकरणम् )

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

" परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा " इत्याम्नायते । किं ते ज्ञात्यादयो मुक्तस्य सङ्कल्पादेव भवन्ति उत प्रयत्नान्तरसव्यपेक्षात्सङ्कल्पादिति संशयः ॥ लोके राज्ञां सत्यसंकल्पानामपि प्रयत्नान्तरसापेक्षत्वदर्शनात् तत्सापेक्षादिति पूर्वः पक्षः । " संकल्पादेव " इत्यवधारणं "विज्ञानघन एव" इतिवद्भविष्यति ॥ राद्धान्तस्तु—"संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यवधारणान्नान्यापेक्षत्वम्। न चेह सत्यकमत्वाद्युपन्यासवन्मुक्तस्यान्यापेक्षत्वे प्रमाणमस्ति । लोके सत्यसंकल्पत्वाभावादेव प्रयत्नान्तरापेक्षत्वम् । न हि परमपुरुषव्यतिरिक्तः कश्चित्सत्यसंकल्पोऽस्ति । मुक्तश्च तत्प्रसादात् तत्साम्यमुपागतस्तथैव ॥ सूत्रमपि व्याख्यातम् ॥

अत एव चानन्याधिपतिः ॥ ९ ॥

अतः श्रुतेरेव मुक्तोऽनन्याधिपतिश्च । अन्याधिपतित्वं कर्माधीनत्वम्। " अपहतपाप्मा सत्यसंकल्पः " इति हि श्रूयते। अतो मुक्तो नान्याधिपतिः ॥

( अभावाधिकरणम् )

अभावं बादरिराह ह्येवम् ॥ १० ॥

किं मुक्तस्य शरीरेन्द्रियाद्यस्ति उत न अथवा यथासंकल्पं अस्ति न वेति संशयः ॥ "न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति मुक्तस्याशरीरत्वश्रवणात् नास्त्येवेत्येकः पक्षः ॥ "स एकधा

भवति त्रिधा भवति" इति सशरीरत्वश्रुतेः अशरीरत्वश्रुतिः कर्मगृहीतशरीरविषयेति शरीरेन्द्रियाद्यस्त्येवेति द्वितीयः पक्षः ॥ राद्धान्तस्तु—"मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति अशरीरस्यैव भोगश्रुतेः "स एकधा भवति" इति श्रुतेश्च यथासंकल्पमस्ति न वेति ॥ सूत्रार्थः—शरीराभावं बादरिर्मेने । एवमाह हि श्रुतिः "अशरीरं वाव सन्तम्" इति ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

शरीरादिभावं जैमिनिर्मेने । कुतः । विकल्पामननात् । विविधः कल्पो विकल्पः । "स एकधा भवति त्रिधा भवति" इत्यादिना मुक्तस्य हि विविधः कल्प आम्नायते । आत्मन एकरूपस्याच्छेद्यस्य वैविध्यासम्भवाच्छरीरद्वारेण हि वैविध्यं ज्ञायते ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अत उभयश्रुतेरिच्छात उभयविधं शरीरवत्त्वं अशरीरत्वं च भगवान्बादरायणो मेने । द्वादशाहवत् । यथा द्वादशाह उभयश्रुतेः सत्रमहीनं च । "द्वादशाहमृद्धिकामा उपेयुः" इति सत्रं "द्वादशाहेन प्रजाकामं याजयेत्" इत्यहीनम्(१) ॥

तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । स्वप्नवत् । यथा स्वप्ने "अथ रथान्" इत्यारभ्य "स हि कर्ता"

(१) बहुयजमानको यागः सत्रम् । एकयजमानको यागोऽहीनम् । उपैतिविधिचोदितं सत्रम् । यजतिविधिचोदितमहीनम् इति विवेकः ॥

तत्कथं मुक्तस्य ज्ञानानन्त्यमुच्यते इत्यत्राह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं मुक्तविषयम्। सुषुप्तिमरणयोरन्यतरापेक्षम्। आविष्कृतं हि श्रुत्या सुषुप्तिमरणयोर्निःसम्बोधत्वं मोक्षदशायां सर्वज्ञत्वं च। सुषुप्तौ तावत् "नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति। विनाशमदर्शनमित्यर्थः। मरणे च "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति। न पश्यतीत्यर्थः। मोक्षे तु "स वा एष दिव्येन चक्षुषा मनसैतान् कामान्पश्यन् रमते य एते ब्रह्मलोके" इति "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च ॥

( जगद्व्यापारवर्जाधिकरणम् )

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

किं मुक्तस्य भोगो निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभव एव जगत्सृष्ट्यादिजगन्नियमनरूपलीलाऽपीति संशयः ॥ "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेः जगन्नियमनरूपलीलापीति पूर्वः पक्षः॥ राद्धान्तस्तु—"यतो वा इमानि भूतानि जायन्ते। सदेव सोम्येदमग्र आसीत्। ब्रह्म ह वा इदमेक एवाग्र आसीत्। आत्मा वा इदमेक एवाग्र आसीत्। एको ह वै नारायण आसीत्" इत्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारः श्रूयते। तत्र तत्र प्रकरणे न मुक्तस्य सन्निधिरप्यस्ति। अतो जगन्नियमनरूपधुरावर्जम् "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता। स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इति अनवधिकातिशयानन्दब्रह्मानुभवे मुक्तस्य साम्यम्। ब्रह्म

इति " य एषु सुप्तेषु " इत्यारभ्य " तदु नात्येति कश्चन"इति चेश्वरसृष्टै रथाद्युपकरणैर्जीवो भुङ्क्ते तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुंक्ते ॥

भावे जाग्रद्वत् ॥ १४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषवन्मुक्तो लीलारसं भुङ्क्ते । परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिकं स्वयमेव सृष्ट्वा तैर्मनुष्यधर्मलीलारसं भुंक्ते । तथा मुक्तश्च सत्यसङ्कल्पत्वात्परमपुरुषलीलान्तर्गतं स्वपितृलोकादिकं स्वयमेव सृष्ट्वा तैर्लीलारसमनुभवति ॥

ननु ग्रात्माऽणुपरिमाण इत्युक्तं कथमनेकेषु शरीरेषु एकस्याणोरात्माभिमानसम्भव इत्यत्राह—

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्य एकस्य एकदेशवर्तिनः स्वया प्रभयाऽनेकदेशप्रवेशः तद्वदात्मनोऽपि एकदेशस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पमात्माभिमानानुगुण्यव्याप्तिः । यथैकस्मिन्देहे हृदयादिदेशे वर्तमानस्याणोरपि सर्वस्मिन्देहेऽहमित्यभिमानानुगुण्यव्याप्तिः स्वप्रभारूपचैतन्येन तद्वत् । तथा हि दर्शयति श्रुतिः " वालाग्रशतभागस्य शतधा कल्पितस्य च, भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते " इति । प्रत्यगात्मनो ह्यणुत्वमेव स्वरूपमिति सूत्रकारमतम् । " नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् " इति परस्यैव महत्त्ववचनात् ॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानबाधं दर्शयति श्रुतिः "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति

तत्कथं मुक्तस्य ज्ञानानन्त्यमुच्यते इत्यत्राह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं मुक्तविषयम्। सुषुप्तिमरणयोरन्यतरापेक्षम्। आविष्कृतं हि श्रुत्या सुषुप्तिमरणयोर्निःसम्बोधत्वं मोक्षदशायां सर्वज्ञत्वं च। सुषुप्तौ तावत् "नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति। विनाशप्रदर्शनमित्यर्थः। मरणे च "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति। न पश्यतीत्यर्थः। मोक्षे तु "स वा एष दिव्येन चक्षुषा मनसैतान् कामान्पश्यन् रमते य एते ब्रह्मलोके" इति "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च ॥

( जगद्व्यापारवर्जाधिकरणम् )

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

किं मुक्तस्य भोगो निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभव एव जगत्सृष्ट्यादिजगन्नियमनरूपलीलाऽपीति संशयः ॥ "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेः जगन्नियमनरूपलीलापीति पूर्वः पक्षः॥ राद्धान्तस्तु—"यतो वा इमानि भूतानि जायन्ते। सदेव सोम्येदमग्र आसीत्। ब्रह्म ह वा इदमेक एवाग्र आसीत्। आत्मा वा इदमेक एवाग्र आसीत्। एको ह वै नारायण आसीत्" इत्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारः श्रूयते। तत्र तत्र प्रकरणे न मुक्तस्य सन्निधिरप्यस्ति। अतो जगन्नियमनरूपधुरावर्जम् "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता। स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इति अनवधिकातिशयानन्दब्रह्मानुभवे मुक्तस्य साम्यम्। ब्रह्म

हि स्वस्य परस्य चानुभूयमानमविशेषेणानवधिकातिशयानन्दाय भवति। आनन्दस्वरूपत्वाविशेषात्॥ सूत्रमपि व्याख्यातम्॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः॥ १८॥

प्रत्यक्षः श्रुतिः। "तस्य सर्वेषु लोकेषु कामचारो भवति। इमान् लोकान् कामान् नीकामरूप्यनुसंचरन्" इत्यादिश्रुत्या मुक्तस्य जगद्व्यापारोपदेशात्सोऽपीति चेन्न। आधिकारिकमण्डलस्थोक्तेः। आधिकारिकाः परमपुरुषेण लोकनियमनाधिकारे नियुक्ता हिरण्यगर्भादयः। तल्लोकस्थभोगेषु मुक्तस्य यदीच्छा वर्तते तत्र तत्र यथाकाम परमपुरुषानुग्रहेण वर्तमानस्तत्स्थान्भोगान् भुंक्त इति तथा श्रुत्योक्तेः। "कामाचारो भवति" इति हि श्रूयते न नियुंक्त इति॥

ननु उत्पत्त्यादिविकारवर्तिहेयमिश्रोऽल्पश्च कथं मुक्तस्य भोगो भवति यत इच्छातः सर्वेषु लोकेषु कामचार उच्यते इत्यत्राह—

विकारावर्ति च तथा हि स्थितिमाह॥ १९॥

चशब्दोऽवधारणे। उत्पत्त्यादिविकारेषु न वर्तते इति विकारावर्ति परं ब्रह्मैवास्य मुक्तस्य भोगः। तथा हि मुक्तस्य स्थितिमाह "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये निरुक्ते निलयनेऽभयं प्रतिष्ठां विंदते अथ सोऽभयं गतो भवति। रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति। ब्रह्मनिष्ठो ब्रह्मैव लब्ध्वाऽऽनन्दी भवतीत्यर्थः। ब्रह्म हि निरतिशयानन्दस्वरूपं निरतिशयकल्याणानन्तगुणकमनन्तमहाविभूति च। तत्र सविभूतिकब्रह्मानुभवाय विभूत्येकदेशभूतलोकेषु सञ्चरतः तत्र तत्र कामचारो भवति इत्युच्यते

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

उत्पत्त्यादिजगन्नियमनं परस्यैव, मुक्तस्य तु परब्रह्मानुभव एव भोगः इत्युक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः। "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। भीषाऽस्माद्वातः पवते। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिका श्रुतिः स्मृतिरपि "अहं सर्वस्य प्रभवः। अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्। मत्तः सर्वं प्रवर्तते। सो ऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। प्रशासितारं सर्वेषाम्" इत्यादिका परविषया। "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः" इत्यादिका श्रुतिः। स्मृतिरपि "प्रियो हि ज्ञानिनोऽत्यर्थमहम्। आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्। वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते।
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥"

इत्यादिका मुक्तविषया।

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

"सो ऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति हि मुक्तस्य ब्रह्मानुभवभोगमात्रवचनाद् ब्रह्मसाम्यलिङ्गाच्च जगद्व्यापारवर्जमिति निश्चीयते॥

यदि नियंतृत्वं परस्यैव तर्हि स्वतन्त्रत्वेन मुक्तं परः कदाचित् पुनरावर्तयिष्यतीत्याह—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

अस्य मुक्तस्यानावृत्तिः शब्दादवगम्यते । यथा "यतो वा इमानि भूतानि जायन्ते । सोऽकामयत बहु स्यां प्रजायेयेति । यः पृथिवीमन्तरो यमयति । य आत्मानमन्तरो यमयति" इति शब्दात्परमपुरुषस्य सृष्ट्य नियन्तृत्वं चावगम्यते तथा "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते । स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।
आ ब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति शब्दादेवैनं कदाचिदपि नावर्तयतीत्यवगम्यते ॥ सूत्रावृत्तिः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

इति श्रीभगवद्रामानुजाविरचिते वेदान्तदीपे चतुर्थस्याध्यायस्य चतुर्थः पादः । समाप्तोऽध्यायः ॥
शास्त्रं च परिसमाप्तम् ॥